॥ श्री स्तम्भनपार्श्वनाथाय नम ॥

श्री खरतरगच्छालङ्कार-जिनवर्द्धमानसूरि-विरचित-आचारदिनकर-ग्रन्थान्तर्गत-श्री शान्तिकाधिकारनाम-चतुस्त्रिंशत्तम-उदयानुसारेण

# श्री-अर्हन्महापूजन-विधिः ॥

| अपरनाम - श्री शान्तिकमहापूजन-विधि

सपादकौ —

जैनाचार्य स्व० जिनकृपाचन्द्रसूरिशिष्य पाठकपदालङ्कृत स्व० सुखसागरगणिवर्य-शिष्य-
मुनि-मङ्गलसागर - मुनि-कान्तिसागरौ ।

प्रकाशक

श्री महावीरस्वामी जैन देरासर ट्रस्ट खरतरगच्छ श्रीसंघ-मुम्बई

वि० स० २०२५ मूल्य रु ३-७५ पैसा पोष्टचार्ज अलग प्रति ७१०

प्रकाशकः—
श्री महावीरस्वामी जैन देहेरासर ट्रस्ट खरतरगच्छ श्रीसंघ
पायधुनी, मुंबई-२

प्राप्तिस्थानः—
श्री महावीर स्वामी जैन देरासर
पायधुनी, मुंबइ-३

: प्राप्तिस्थान :
सोमचंद डी. शाह
पालीताणा

मुद्रकः—
अमरचन्द बेचरदास महेता
श्री बहादुरसिंहजी प्रिन्टींग प्रेस
पालीताणा ( गुजरात )

॥ २ ॥

## —❀ निवेदन ❀—

महाप्रभावसम्पन्न अर्हन्महापूजन आपके कर-कमलोमे समर्पित करते हमे अपार हर्ष हो रहा है, आध्यात्मिक और शाश्वत शान्तिकी ओर मानवजीवनको गतिमान करनेवाले ऐसे पूजन विधानका महत्व रहा है, विघ्ननिवारण, शासनोत्कर्ष एवम् श्रीसघकी सुख, शान्ति और समृद्धिकी अभिवृद्धि ही अर्हन्महापूजनका मूल उद्देश्य है, पुरातन ज्ञानागारोमें अनेक सुमान्य प्रतियोकी उपलब्धि ही इसकी व्यापकताका मुख्य प्रमाण है, विगत दशकसे तो इसका प्रसार बहुत ही अधिक हो गया है, प्रतिष्ठादिक मागलिक प्रसगो पर इसका पूरा विधान सोत्साह सम्पन्न किया जाता है, परन्तु सस्कारशील मस्तिष्कमे प्रश्न रेखा उभरती है कि इस विख्यात पूजन-पद्धतिके प्रणेता कौन है ? क्रियाविधि सम्पन्न करनेवाले जिज्ञासुओंको शकाका समुचित उत्तर नहीं देते, इसका कारण उनका अनौदार्य या अनभिज्ञता है, अर्हन्महापूजनके प्रणेता है खरतर गच्छके आचार्य अभयदेवसूरिजीके शिष्य और उग्रविहारी जयानन्दसूरिके पट्टधर श्रीजिनवर्द्धमानसूरि, जो इस गच्छकी रुद्रपल्लीय शाखासे सबद्ध थे स १४६८ कार्तिक शुक्ला १५ को जालधरप्रदेशके नन्दनवन नगरमे अनन्तपालके राज्यमे ४१ उद्योमें जिनवर्द्धमानसूरिजीने आचारदिनकरकी रचना की, जैन साहित्यमें यही एक मात्र ऐसी कृति है जो विधि विधानकी दृष्टिसे अति उपयोगी और सर्वमान्य है, अर्हन्महापूजन इसी मूल्यवान् रचनाका एक अश है, प्रतिष्ठाविधानके

अन्तर्गत नंद्यावर्त्तमहापूजन, (ब्रह्मस्नात्र विधि) अर्हद्महापूजन शान्तिकविधान और अर्हन्महापूजन पौष्टिकविधान हैं, उपर्युक्त महापूजनानन्तर्गत पच्चीस कुसुमांजलियें भी सम्मिलित हैं, जो न केवल प्रभुके प्रति भक्तकी भव्यभावना ही अभिव्यक्त करती हैं, अपितु, उनका काव्यत्व सौष्ठव भी मनोहरी है, श्रवण मात्रसे हृदयतंत्रीके तार झंकृत हो उठते हैं, आत्म-विभोर होकर मानव अहं और दर्पवृत्तिका त्याग कर देता है, इन्हीं कुसुमांजलिके सुश्राव्य काव्यों पर विद्वद्वरेण्य आचार्य महाराज श्री धर्मधुरंधरसूरिजीने पाण्डित्यपूर्ण वृत्ति निर्मित कर लोकभोग्य बनानेका श्लाघ्य प्रयत्न किया है.

परमपूज्य गुरुवर्य स्व. उ० सुखसागरजी महाराज सा. की आन्तरिक इच्छा थी कि इस रचना का प्रकाशन नितान्त वांछनीय है, विधिका विधान है कि आज पूज्यवर प्रकाशित कृतिको देखनेके लिए इस लोकमे नहीं हैं,

प्रान्तमें बम्बई (पायधुनी) के महावीरस्वामी मंदिरके ज्ञानप्रेमी ट्रस्टीओंको धन्यवाद देना आवश्यक है कि उनने इसके महत्वको समझ कर प्रकाशनार्थ अर्थ व्यय करना स्वीकार किया, क्रियाकारकोंसे निवेदन है कि यदि इसमें कोई स्खलना दृष्टिगत हो तो सम्पादकोंको सूचित करनेका कष्ट करें.

सोनवाई बिल्डींग, वि. सं. २०२५ फाल्गुन सुदि १३
मु० पालीताणा (सौ.)

मुनि मंगलसागर, मुनि कान्तिसागर

॥ श्री स्तम्भनपार्श्वनाथाय नम ॥

श्री खरतरगच्छालंकार–वर्धमानसूरि–विरचित–आचारदिनकरग्रन्थान्तर्गत–

श्री शान्तिकाधिकारनाम–चतुस्त्रिंशत्तम–उदयानुसारेण–

# श्री-अर्हन्महापूजन-विधिः ॥

[ अपरनाम– श्री शान्तिकमहापूजनविधिः ]

अथ शान्तिकाधिकारविधिः ॥ तत्रादौ गुरुर्गृह्यगुर्वा सुस्नातः कङ्कणमुद्राङ्कितकरः सदशाव्यङ्गश्वेतवस्त्रधरो भवेत् । शान्तिककारोऽपि तादृग्वेषभूषणधारी सभ्रातृपुत्रो भवेत् । गीतनृत्यवाद्यादिनारीमङ्गलगायनाचार प्रगुणीकुर्यात् ततो बृहत्स्नात्रविधिनारभेत ।

जिनार्चनविधिरर्हत्कल्पकथनानुसारेण प्रोच्यते । स यथा–

श्राद्धः केवलदृढसम्यक्त्वधारी आप्तगुरूपदेश' सर्वांगसुस्नातः वद्धधम्मिलः शुचिपरिधानः कृतोत्तरासंगः स्ववर्णानुसारेण ( स्वलक्ष्म्यनुसारेण ) जिनोपवीतोत्तरीयोत्तरासगभृत् कृतमुखकाशोऽनन्यचित्तो जिनालये चैत्ये वा एकान्ते जिनार्चन कुर्यात् ।

प्रथमदिने
प्रात
करणीय
॥ १ ॥

## ॥ जिनार्चनविधिः ॥

प्रथमं स्नात्रपीठे श्रीशान्तिनाथप्रतिमां स्थापयेत् । तत्प्रतिमाया अलाभेऽन्यजिनप्रतिमायामपि निश्चयेन श्री शान्तिनाथप्रतिमां कल्पयेत् तन्मन्त्रो यथा—

ॐ नमोऽर्हद्भ्यस्तीर्थकरेभ्यः श्रीशान्तिनाथेभ्यो जिनेभ्योऽनाद्यन्तेभ्यः समबलेभ्यः समकृत्येभ्यः समप्रभावेभ्यः समकेवलेभ्यः समतत्त्वोपदेशेभ्यः समपूजनेभ्यः समकल्पनेभ्यः श्रीशान्तिनाथभगवान् (सममस्त्वत्र तीर्थकरनाम) पञ्चदशकर्मभूमिभवस्तीर्थकरो योऽत्राराध्यते सोऽत्र प्रतिमायां सन्निहितोऽस्तु स्वाहा ॐ ह्रीँ ठः ठः ठः स्वाहाः ॥ अनेन मन्त्रेण जिनप्रतिमायां यस्य तीर्थकरस्य कल्पना विधीयते स तीर्थकरः प्रतिमायां पूजितो भवति ॥ अत एव वासक्षेपेण अन्यप्रतिमायां शान्तिजिनकल्पना ॥ तदनन्तरं पूर्वमर्हत्कल्पविधिना पूर्णां जिनार्चनपूजां विदध्यात् ॥

प्रथमदिने प्रातः करणीयः

## ॥ वज्रपञ्जरस्तोत्रम् ॥

ॐ परमेष्ठिनमस्कारं, सारं नवपदात्मकम् । आत्मरक्षाकरं वज्र–पञ्जराभं स्मराम्यहम् ॥ १ ॥
ॐ नमो अरिहंताणं, शिरस्कं शिरसि स्थितम् । ॐ नमो सव्वसिद्धाणं, मुखे मुखपटं वरम् ॥ २ ॥
ॐ नमो आयरियाणं, अंगरक्षातिशायिनी । ॐ नमो उवज्झायाणं, आयुधं हस्तयोर्दृढम् ॥ ३ ॥

ॐ नमो लोए सव्वसाहूण, मोचके पादयोः शुभे । एसो पचनमुक्कारो, शिला वज्रमयी तले ॥ ४ ॥
सव्वपावप्पणासणो, वप्रो वज्रमयो बहिः । मगलाण च सव्वेसिं, खादिरागारखातिका ॥ ५ ॥
स्वाहात च पद ज्ञेय, पढम हवइ मंगलं । वप्रोपरि वज्रमय, पिधानं देहरक्षणे ॥ ६ ॥
महाप्रभावा रक्षेय, क्षुद्रोपद्रवनाशिनी । परमेष्ठिपदोद्भूता, कथिता पूर्वसूरिभिः ॥ ७ ॥
यश्चैना कुरुते रक्षा परमेष्ठिपदैः सदा । तस्य न स्याद् भयं व्याधि—राधिश्चापि कदाचन ॥ ८ ॥

क्षि प ॐ स्वा हा हा स्वा ॐ प क्षि इत्यक्षरैर्यथाक्रम पादाङ्गुष्ठाग्रजानुसन्धि—हृदयमुखभालातान्यारोहावरोहाभ्या मध्याङ्गुलिद्वयाग्राभ्या स्पृशन् आत्मरक्षा करोति॥एव वज्रपञ्जरकवचादिमन्त्रेण शरीररक्षामात्मरक्षा च प्रथम विदध्यात् । तदनु च जलपुष्पपत्राक्षतफलधूपवह्निदीपगन्धादीना सर्वेषा पूजोपकरणाना निरवद्यताकरणम्॥ तन्मन्त्राश्चेमे-जलमन्त्रः-

ॐ आपोऽप्काया एकेन्द्रिया जीवा निरवद्यार्हत्पूजाया निर्व्यथाः सन्तु निरपायाः सन्तु सद्गतय' सन्तु न मेऽस्तु सघट्टनहिंसापापमर्हदर्चने स्वाहा ॥ इति जलाभिमन्त्रणम् ।

अथ पत्रपुष्पफलधूपचन्दनादिमन्त्रः—

ॐ वनस्पतयो वनस्पतिकाया जीवा एकेन्द्रिया निरवद्यार्हत्पूजाया निर्व्यथाः सन्तु निरपायाः सन्तु सद्गतयः सन्तु न मेऽस्तु सघट्टनहिंसापापमर्हदर्चने स्वाहा ॥ इति पत्रपुष्पफलचन्दनधूपाद्यभिमन्त्रणम् ।

सुप्रतिष्ठिताः सन्तु स्वाहा ॥ इति मौनेन कथयित्वा भगवच्चरणोपरि पुष्पस्थापनम् ॥

पुनरपि पुष्पेण जलार्द्रितेन पूजापूर्वकं कथनं यथा— स्वागतमस्तु सुस्थितिरस्तु सुप्रतिष्ठास्तु स्वाहा ॥

ततः पुष्पाभिषेकेण—अर्घ्यमस्तु पाद्यमस्तु आचमनीयमस्तु सर्वोपचारैः पूजास्तु स्वाहा ॥

एभिर्वचनैः पुनर्जिनप्रतिमोपरि जलार्द्रितपुष्पारोपणं विधीयते ॥ ततो जलं गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं वं— जीवनं तर्पणं हृद्यं, प्राणदं मलनाशनम् ।
जलं जिनार्चनेऽत्रैव, जायतां सुखहेतवे ॥ १ ॥ स्वाहा ॥

इति जलेन प्रतिमाभिषेचनम् । स्नपनं च । ततश्चन्दनकुंकुमकर्पूरकस्तूरीप्रमुखगन्धं करे गृहीत्वा मन्त्रश्लोकः ।

यक्षकर्दमपूजा—

ॐ अर्हं लं— दं गन्धं महामोदं, बृंहणं प्रीणनं सदा ।
जिनार्चनेऽत्र सत्कर्म-संसिद्ध्यै जायतां मम ॥ १ ॥ स्वाहा ॥

इति विविधगन्धैः प्रतिमाविलेपनम् ॥ ततः पुष्पपत्रिकादि हस्ते गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं क्ष— नानावर्णं महामोद, सर्वत्रिदशवल्लभम् । -
जिनार्चनेऽत्र संसिद्ध्यै, पुष्पं भवतु मे सदा ॥ १ ॥ स्वाहा ॥

इति पुष्पपूजा । ततोऽक्षतान् गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं त— प्रीणन निर्मल वल्यं, माङ्गल्यं सर्वसिद्धिदम् ।
जीवनं कार्यसंसिद्ध्यै, भूयान्मे जिनपूजने ॥ १ ॥ स्वाहा ॥

इत्यक्षतान् जिनप्रतिमोपरि आरोपयेत् ॥ ततः पूगजातिफलानि वर्त्तमानर्तुफलं करे गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं फः— जन्मफल स्वर्गफलं, पुण्यमोक्षफल फलम् ।
दद्याज्जिनार्चनेऽत्रैव, जिनपादाग्रसंस्थितम् ॥ १ ॥ स्वाहा ॥

इति जिनाग्रे फलपूजा ॥ ततो धूप गृहीत्वा श्लोकः—

ॐ अर्हं र— श्रीखण्डागरुकस्तूरी—द्रुमनिर्याससंभवः ।
प्रीणन सर्वदेवाना, धूपोऽस्तु जिनपूजने ॥ १ ॥ स्वाहा ॥

इति वह्नौ धूपक्षेपः ॥ ततः पुष्प गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं रं- पञ्चज्ञानमहाज्योति-र्मयोऽयं ध्वान्तघातने ।
द्योतनाय प्रतिमाया, दीपो भूयात्सदार्हतः ॥ १ ॥ स्वाहा ॥

इति दीपमध्ये पुष्पन्यासः । ततः पुष्पाणि गृहीत्वा मन्त्रः-

ॐ अर्हं भगवद्भ्योऽर्हद्भ्यो जल-गन्ध-पुष्पाक्षत-फल-धूप-दीपैः संप्रदानमस्तु, ॐ पुण्याहं पुण्याहं, प्रीयन्तां प्रीयन्तां भगवन्तोऽर्हन्तस्त्रिलोकस्थिता, नामाकृति-द्रव्य-भावयुताः स्वाहा ॥ इति जिनपूजनम् ॥

ततो वासान् गृहीत्वा मन्त्रो यथा-

ॐ सूर्य-सोमाङ्गारक-बुध-गुरु-शुक्र-शनैश्चर-राहु-केतुमुखा ग्रहा इह जिनपादाग्रे समायान्तु पूजां प्रतीच्छन्तु स्वाहा ॥

इत्युक्त्वा जिनपादाधः स्थापितग्रहेषु स्नानपट्टे वा वासान् निक्षिपेत् ॥ ततः-

आचमनमस्तु स्वाहा । गन्धमस्तु स्वाहा । पुष्पमस्तु स्वाहा । अक्षतमस्तु स्वाहा । फलमस्तु स्वाहा । धूपोऽस्तु स्वाहा । दीपोऽस्तु स्वाहा । इति क्रमेण जल-गन्ध-पुष्पाक्षत-फल-धूप-दीपैर्ग्रहाणां पूजा ॥

ततोऽञ्जल्यग्रे पुष्पं गृहीत्वा मन्त्रः-

ॐ सूर्य-सोमाङ्गारक-बुध-गुरु-शुक्र-शनैश्चर-राहु-केतुमुखा ग्रहाः सुपूजिताः सन्तु, सानुग्रहाः सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु, माङ्गल्यदाः सन्तु, महोत्सवदाः सन्तु, स्वाहा ॥ इति ग्रहेषु पुष्पारोपणम् ।

पुनरनयैव रीत्या मन्त्रः—

ॐ इन्द्राग्नि-यम-निर्ऋति-वरुण-वायु-कुबेरेशान—नागब्रह्माणो लोकपालाः सविनायकाः सक्षेत्रपाला इह जिन-पादाग्रे समागच्छन्तु पूजा प्रतीच्छन्तु स्वाहा ॥ इति पूजापट्टोपरि लोकपालाना वासक्षेपः ॥ ततः—

आचमनमस्तु स्वाहा । गन्धमस्तु स्वाहा । पुष्पमस्तु स्वाहा । अक्षतमस्तु स्वाहा । फलमस्तु स्वाहा । धूपोऽस्तु स्वाहा । दीपोऽस्तु स्वाहा । इति क्रमेण जल—गन्ध—पुष्पाक्षत—फल—धूपैर्लोकपालाना पूजा ॥ ततोऽञ्जल्यग्रे पुष्प गृहीत्वा मन्त्रः—

ॐ इन्द्राग्नि—यम—निर्ऋति—वरुण—वायु—कुबेरेशान—नाग—ब्रह्माणो लोकपालाः सविनायकाः सक्षेत्रपालाः सुपूजिताः सन्तु, सानुग्रहाः सन्तु, तुष्टिदा' सन्तु, पुष्टिदाः सन्तु, माङ्गल्यदाः सन्तु, महोत्सवदाः सन्तु, स्वाहा ॥ इति लोकपालेषु पुष्पारोपणम् । ततः पुष्पाञ्जलिं गृहीत्वा मन्त्रो यथा—

ॐ अस्मत्पूर्वजा गोत्रसभवा देवगतिगताः सुपूजिताः सन्तु सानुग्रहाः सन्तु तुष्टिदाः सन्तु पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु महोत्सवदाः सन्तु स्वाहा ॥ इति जिनपादाग्रे पुष्पाञ्जलिं क्षिपेत् । ततः पुनः पुष्पाञ्जलिं गृहीत्वा मन्त्र'—

ॐ अर्हं अर्हद्भक्ताष्टनवत्युत्तरशत (१९८) देवजातयः सदेव्यः पूजा प्रतीच्छन्तु, सुपूजिताः सन्तु, सानुग्रहाः

सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु, माङ्गल्यदाः सन्तु, महोत्सवदाः सन्तु, स्वाहा ॥ इति जिनपादाग्रे पुष्पाञ्जलिं क्षिपेत् ।

ततोऽञ्जल्यग्रे पुष्पं धृत्वा अर्हन्मन्त्रं स्मृत्वा तेन पुष्पेण जिनप्रतिमां पूजयेत् । अर्हन्मन्त्रो यथा—

" ॐ अर्हं नमो अरिहंताणं, ॐ अर्हं नमो सयंसंबुद्धाणं, ॐ अर्हं नमो पारगयाणं स्वाहा " ॥

अयं तु त्रिपदो मन्त्रः, श्रीमतामर्हतां परः । भोगमोक्षप्रदो नित्यं, सर्वपापनिकृन्तनः ॥ १ ॥
न स्मर्तव्योऽपवित्रैश्च, नान्यचित्तैर्न सस्वरम् । न श्राव्यश्च नास्तिकानां, नैव मिथ्यादृशामपि ॥ २ ॥

ततोऽष्टोत्तरशतं तदर्धं वा मन्त्रजापः । ( १०८ अथवा ५४ मन्त्रजापः कार्यः )

ततो नैवेद्यढौकनं पात्रद्वयेन ( षड्रसभोजनस्थालः ) । तत एकपात्रजलं चुलुके गृहीत्वा मन्त्रः—

ॐ अर्हं— नानापड्रससंपूर्णं, नैवेद्यं सर्वमुत्तमम् ।
जिनाग्रे ढौकितं सर्व—सम्पदे मम जायताम् ॥ १ ॥

प्रत्येकं तत्र नैवेद्ये जलचुलुकक्षेपः । पुनर्जलचुलुकं गृहीत्वा मन्त्रो यथा—

ॐ सर्वे गणेशक्षेत्रपालाद्याः सर्वे दिक्पालाः सर्वेऽस्मत्पूर्वजोद्भवा देवाः सर्वेऽष्टनवत्युत्तरशतं देवजातयः सदेव्योऽर्हद्भक्ता अनेन नैवेद्येन संतर्पिताः सन्तु, सानुग्रहाः सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु,

महोत्सवदाः सन्तु स्वाहा ॥ इति द्वितीयनैवेद्यस्योपरि चुलुकक्षेपः ॥ इति जिनार्चनविधिः ॥ 卐

ततः पुष्पाञ्जलिं गृहीत्वा—

यो जन्मकाले पुरुषोत्तमस्य, सुमेरुशृङ्गे कृतमज्जनैश्च ।
देवैः प्रदत्तः कुसुमाञ्जलिः स, ददातु सर्वाणि समीहितानि ॥ १ ॥

पुष्पाञ्जलिक्षेपः ॥ ततः द्वि० कु० ॥

राज्याभिषेकसमये त्रिदशाधिपेन, छत्रध्वजाङ्कतलयोः पदयोर्जिनस्य ।
क्षिप्तोऽतिभक्तिभरतः कुसुमाञ्जलिर्यः, स प्रीणयत्यनुदिनं सुधिया मनांसि ॥ २ ॥

द्वितीयकुसु० ॥ ततः तृतीयकुसु० ॥

देवेन्द्रैः कृतकेवले जिनपतौ सानन्दभक्त्यागतैः सदेहव्यपरोपणक्षमशुभव्याख्यानबुद्धाशयैः ।
आमोदान्वितपारिजातकुसुमैर्यत्स्वामिपादाग्रतो, मुक्तः स प्रतनोतु चिन्मयहृदा भद्राणि पुष्पाञ्जलिः ॥३॥

तृतीयकुसुमाञ्जलिक्षेपः ॥ इति वृत्तत्रयेण पुष्पाञ्जलित्रयक्षेपः ॥ ततो लवणं गृहीत्वा—

---

卐 प्रथमदिनमध्याह्ने द्वितीयदिने तृतीयदिने च क्रियाविधिकरणात् पूर्वं पृष्ठ १ से पृष्ठ ८ ॥ इति जिनार्चन विधि ॥ तत्पर्यंत विधि विधाय तत्पश्चाद् अग्रेतनक्रियाविधि करणीय ।

लावण्यपुण्याङ्गभृतोऽर्हतो य–स्तद्दृष्टिभावं सहसैव धत्ते ।
स विश्वभर्तुर्लवणावतारो, गर्भावतारं सुधियां विहन्तु ॥ १ ॥

इति जिनस्य लवणोत्तारणम् ॥ ततः पुनरपि लवणं० ॥

लावण्यैकनिधेर्विश्व–भर्तुस्तद्वृद्धिहेतुकृत् । लवणोत्तारणं कुर्याद्, भवसागरतारणम् ॥ २ ॥

इति द्वि० लवणोत्तारणम् । इति वृत्तद्वयेन द्विवेलं लवणोत्तारणम् । ततो लवणमिश्रं जलं गृहीत्वा वृत्तम्–

सक्षारतां सदासक्तां, निहन्तुमिव सोद्यमः । लवणाब्धिलवणाम्बु–मिषात्ते सेवते पदौ ॥ १ ॥

इति लवणमिश्रपानीयोत्तारणम् । ततः शुद्धं जलं गृहीत्वा वृत्तम्–

भुवनजनपवित्रताप्रमोद–प्रणयनजीवनकारणं गरीयः ।
जलमविकलमस्तु तीर्थनाथ–क्रमसंस्पर्शि सुखावहं जनानाम् ॥ १ ॥

इति जिनचरणयोः शुद्धजलप्रक्षेपः । ततः सप्तवर्तिकावद्वारात्रिकावतारणवृत्तम्–

सप्तभीतिविघातार्हं, सप्तव्यसननाशकृत् । यत्सप्तनरकद्वार–सप्तारतिुलां गतम् ॥ १ ॥

सप्ताङ्गराज्यफलदानकृतप्रमोदं, तत्सप्ततत्त्वविदनन्तकृतप्रबोधम् ।
तच्छक्रहस्तधृतसंगतसप्तदीप–मारात्रिकं भवतु सप्तमसद्गुणाय ॥ २ ॥

ततो मङ्गलप्रदीपावतारणवृत्तानि यथा—

विश्वत्रयभवैर्जीवैः, सदेवासुरमानवैः । चिन्मङ्गल श्रीजिनेन्द्रात्, प्रार्थनीयं दिने दिने ॥ १ ॥

यन्मङ्गल भगवतः परमार्हतः श्री—संयोजने प्रतिनभूव विवाहकाले ।
सर्वासुरासुरवधूमुखगीयमान, सप्तर्पिभिश्च सुमनोभिरुदीर्यमाणम् ॥ २ ॥

दास्य गतेपु सकलेपु सुरासुरेपु, राज्येऽर्हतः प्रथमसृष्टिकृतो यदासीत् ।
सन्मङ्गल मिथुनपाणिगतीर्थवारि, पादाभिपेकविधिना न्युपचीयमानम् ॥ ३ ॥

यद्विश्वाधिपतेः समस्ततनुभृत्ससारनिस्तारणे.
तीर्थे पुष्टिमुपेयुपि प्रतिदिन वृद्धिं गतं मङ्गलम् ।
तत्सप्रत्युपनीतपूजनविधौ विश्वात्मनामर्हता,
भूयान्मङ्गलमक्षयं च जगते स्वस्त्यस्तु सघाय च ॥ ४ ॥

इति वृत्तचतुष्टयेन मङ्गलदीपोल्लासः ॥ ततः शक्रस्तनपाठः ( नमुत्थुण० ) ॥

॥ इति जिनार्चनविधिः ॥ ( आचारदिनकर पृ ५८—६१ )

अथ कश्चनापि श्राद्धो निर्भरार्हद्भक्तिः नित्यं पर्वणि कार्यान्तरे वा जिनस्नात्रं ( लघुस्नात्रं ) चिकीर्षति तस्य चायं विधिः ॥

पूर्वस्नात्रपीठे पूर्वोक्तप्रकारेण दिक्पालग्रहान्यदेवतापूजनवर्जितेन जिनप्रतिमां संपूज्य तथाऽऽरात्रिकं विधाय मंगलदीपवर्जितं श्राद्धः पूर्वोपचारयुक्तो गुरुसमक्षं चतुर्विधे श्रीसंघे मीलिते चतुर्विधे गीतवाद्याद्युत्सवे पुष्पाञ्जलिं करे गृहीत्वा 'नमो अरिहंताणं, नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः' उक्त्वा वृत्तद्वयं शार्दूलमालिनीरूपं पठेत्—

कल्याणं कुलवृद्धिकारिकुशलश्लाघार्हमत्यद्भुतं, सर्वाघप्रतिघातनं गुणगणालंकारविभ्राजितम् ।
कान्तिश्रीपरिरंभणप्रतिनिधिप्रख्यं जगत्यर्हतां, ध्यानं दानवमानवैर्विरचितं सर्वार्थसंसिद्धये ॥१॥

भुवनभवनपापध्वान्तदीपायमानं, परमतपरिघातप्रत्यनीकायमानम् ।
धृतिकुवलयनेत्रावश्यमंत्रायमाणं, जयति जिनपतीनां ध्यानमभ्युत्तमानाम् ॥२॥

इति पुष्पाञ्जलिक्षेपः ततो धूपं गृहीत्वा वृत्तम्— ( उपजातिः )

कर्पूरसिल्हाधिककाकतुंड—कस्तूरिकाचंदननंदनीयः ।
धूपो जिनाधीश्वरपूजनेऽत्र, सर्वाणि पापानि दहत्वजस्रम् ॥१॥

अनेन वृत्तेन सर्वपुष्पाञ्जल्यन्तरे धूपोत्क्षेपः शक्रस्तवपाठश्च । ततो जलकलशं गृहीत्वा श्लोक—वसन्ततिलके पठेत्—

केवली भगवानेकः स्याद्वादी मंडनैर्विना । विनापि परिवारेण वन्द्यते प्रभुतोर्जितः ॥ १ ॥

तस्येशितुः प्रतिनिधिः सहजश्रियाढ्यः पुष्पैर्विनापि हि विना वसनप्रतानैः ।
गन्धैर्विना मणिमयाभरणैर्विनापि लोकोत्तरं किमपि दृष्टिसुख ददाति ॥ २ ॥

इति प्रतिमायाः कलशाभिषेकः । ततः पुष्पालङ्कारादीनामवतारण, ततः पुनः पुष्पाञ्जलिं गृहीत्वा वृत्तद्वयम्—

विश्वानदकरी भवाम्बुधितरी सर्वापदा कर्त्तरी, मोक्षाध्वैकविलंघनाय विमला विद्या पर खेचरी ।
दृष्ट्युद्भानितकल्मपापनयने वद्धप्रतिज्ञा दृढ, रम्यार्हत्प्रतिमा तनोतु भविना सर्वं मनोवाछितम् ॥१॥
परमतरसमागमोत्थ–प्रभूमरहर्षविभासिसन्निकर्षा ।
जयति जगदिनस्य शस्यदीप्तिः प्रतिमा कामितदायिनी जनानाम् ॥ २ ॥

पुष्पाञ्जलिक्षेपः । पूर्वोक्तवृत्तेन (कर्पूर०) धूपोत्क्षेपः शक्रस्तवश्च । पुनः पुष्पाजलि गृहीत्वा वृत्तद्वयम्—

न दुःखमतिगात्रक न विपदा परिस्फूर्जित, न चापि यशसा क्षतिर्न विषमा नृणा दुःस्थता ।
न चापि गुणहीनता न परमप्रमोदक्षयो, जिनार्चनकृता भवे भवति चैव निःसशयम् ॥ १ ॥
एतत्तत्त्व परममसमानन्दसपत्निदान, पातालौकः सुरनररहित साधुभि॰ प्रार्थनीयम् ।
सर्वारम्भोपचयकरण श्रेयसा सन्निधान, साध्य सर्वैर्विमलमनसा पूजनं विश्वभर्तुः ॥ २ ॥

इति पुनः पुष्पाञ्जलिक्षेपः । ततो धूप गृहीत्वा वृत्तद्वयं पठेत्—

कर्पूरागरुसिल्हचन्दनबलामांसीशशैलेयक—श्रीवासद्रुमधूपरालघुसृणैरत्यन्तमामोदितः ।
व्योमस्थः प्रसरच्छशांककिरणज्योतिः प्रतिच्छादको, धूमो धूपकृतो जगत्त्रयगुरोः सौभाग्यमुत्तंसतु ॥ १ ॥
( शार्दूल० )

सिद्धाचार्यप्रभृतीन् पंचगुरून् सर्वदेवगणमधिकम् । क्षेत्रे काले धूपः प्रीणयतु जिनार्चनारचितः ॥२॥ (आर्या)

इति धूपोत्क्षेपः । शक्रस्तवपाठश्च । पुनः पुष्पाञ्जलिं गृहीत्वा वसन्ततिलकोपजाती पठेत्—

जन्मन्यनन्तसुखदे भुवनेश्वरस्य, सुत्रामभिः कनकशैलशिरःशिलायाम् ।
स्नात्रं व्यधायि विविधाम्बुधिकूपवापी—कासारपल्वलसरित्सलिलैः सुगन्धैः ॥ १ ॥
तां बुद्धिमाधाय हृदीह काले, स्नात्रं जिनेन्द्रप्रतिमागणस्य ।
कुर्वन्ति लोकाः शुभभावभाजो, महाजनो येन गतः स पन्थाः ॥ २ ॥

इति पुष्पाञ्जलिक्षेपः । ततः पुष्पसमूहं गृहीत्वा वृत्तम्—

परिमलगुणसारसद्गुणाढ्या, बहुसंसक्तपरिस्फुरद्द्विरेफा ।
बहुविधबहुवर्णपुष्पमाला, वपुषि जिनस्य भवत्वमोघयोगा ॥ १ ॥

अनेन वृत्तेनापादान्तशिरोऽन्तं जिनप्रतिमायां पुष्पारोपणम् । पूर्ववृत्तेन (कर्पूर०) धूपोत्क्षेपः । शक्रस्तवपाठश्च । ततः पुष्पाञ्जलिं करे गृहीत्वा शार्दूलोपजाती पठेत्—

य: साम्राज्यपदोन्मुखे भगवति स्वर्गाधिपैर्गुम्फितो
मन्त्रित्व बलनाथतामधिकृतिं स्वर्णस्य कोशस्य च ।
बिभ्रद्भिः कुसुमाञ्जलिर्विनिहितो भक्त्या प्रभोः पादयो-
र्दुःखौघस्य जलाजलिः स तनुतादालोकनादेव हि ॥ १ ॥

चेतः समाधातुमतीन्द्रियार्थे पुण्य विधातु गणनाव्यतीतम् ।
निक्षिप्यतेऽर्हत्प्रतिमापदाग्रे, पुष्पाञ्जलिः प्रोद्गतभक्तिभावैः ॥ २ ॥

इति पुष्पाञ्जलिक्षेपः । पूर्ववृत्तेन ( कर्पूरसिल्हा० ) धूपोत्क्षेपः । शक्रस्तवपाठश्च । ततः पुष्पादिभिः प्रतिमा पूज्यते । ततः स्नात्रकलशप्रगुणीकरणम् । ततः कलशास्तु मणि-स्वर्ण-रूप्य-ताम्र-मिश्रधातु-मृण्मयाः स्नात्रचतुष्किकोपरि स्थाप्याः । तेषु सर्वजलाशयोदकानि गगोदकमिश्राणि निवेशयेत् । चंदन-कुंकुम-कर्पूरादिभिः सुगंधद्रव्यैर्वासयेत्, चदनादिभिः कुसुममालाभिश्च कलशान् पूजयेत् । जलपुष्पाद्यभिमन्त्रणमन्त्रास्ते पूर्वोक्ता एव । ततः स एकः श्राद्धोऽन्येऽपि च बहवः पूर्वोदितवेषशौचभाजो गन्धानुलिप्तकरा मालाविभूषितकठा विशिष्टमणिकनकादिविभूषणास्तदभावे च चदनकुकुमकृतविभूषणास्तान् कलशान् करे दधति । ततस्ते स्वस्वप्रज्ञानुसारेण जिनजन्माभिषेकाकितस्नात्रस्तोत्राणि सजिनस्तुतिषट्पदानि पठन्ति । तत इमानि वृत्तानि पठेयुः—

जाते जन्मनि सार्वविष्टपपतेरिन्द्रादयो निर्जरा-
नीत्वा तं करसम्पुटेन वहुभिः सार्द्धं विशिष्टोत्सवे ।
शृंगे मेरुमहीधरस्य मिलिते सानन्ददेवीगणे,
स्नात्रारंभमुपानयन्ति वहुधा कुंभांवुगंधादिकम् ॥ १ ॥ ( शार्दूल० )

योजनमुखान् रजतनिष्कमयान् मिश्रधातुमृद्रचितान् ।
दधते कलशान् संख्या तेषां युगपद्रदन्तिमिता ॥ २ ॥ ( आर्या० )

वापीकूपहृदाम्वुधितडागपल्वलनदीनिर्झरादिभ्यः ।
आनीतैर्विमलजलै-स्तानधिकं पूरयन्ति च ते ॥ ३ ॥ ( आर्या० )

कस्तूरीघनसारकुंकुमसुराश्रीखंडकक्कोलकै-र्ह्रीविरादिसुगन्धवस्तुभिरलंकुर्वन्ति तत्संवरम् ।
देवेन्द्रावरपारिजातवकुलश्रीपुष्पजातीजपा-मालाभिः कलशाननानि दधते संप्राप्तहारस्रजः ॥ ४ ॥
( शार्दूल० )

ईशानाधिपतेर्निजांककुहरे संस्थापितं स्वामिनं, सौधर्माधिपनिर्मिताद्भुतचतुःप्रांशूक्षशृंगोद्गतैः ।
धारावारिभरैः शशांकविमलैः सिंचन्त्यनन्यातयः शेपाश्चैव सुराप्सरःसमुदयाः कुर्वन्ति कौतुहलम् ॥ ५ ॥
( शार्दूल० )

वीणामृदङ्गतिमिलार्द्रकराहनद्ध—ढक्काहुडुक्कपणवस्फुटकाहलाभिः ।
मद्रवेणुझल्लरककुदुभिर्विखिणीभिः, वाद्यैः सृजन्ति सकलाप्सरसो विनोदम् ॥६॥ ( वसन्ततिलका० )
शेषाः सुरेश्वरास्तत्र गृहीत्वा करसम्पुटैः । कलशैस्त्रिजगन्नाथ स्नपयन्ति महामुदः ॥ ७ ॥ (श्लोकः)
तस्मिंस्तादृश उत्सवे वयमपि स्वर्लोकसवासिनो, भ्रान्ता जन्मनिवर्त्तनेन विहितश्रीतीर्थसेवाधियः ।
जातास्तेन विशुद्धबोधमधुना संप्राप्य तत्पूजनं,

स्मृत्वैतत् करवाम विष्टपविभोः स्नात्रं मुदामास्पदम् ॥ ८ ॥ (शार्दूल०)

बालत्तणमि सामिअ सुमेरुसिहरमि कणयकलसेहिं ।
तिअसासुरेहिं ण्हविओ ते धन्ना जेहिं दिट्ठो सि ॥ ९ ॥

इति कलशैः प्रतिमाभिषेचनम् । ततः सर्वेऽपि गुरुक्रमविशेषेण पुरुषाः स्त्रियोऽपि गन्धोदकैः स्नात्र कुर्वन्ति, ततोऽभिषेकान्ते गन्धोदकपूर्णं कलशं गृहीत्वा—

संघे चतुर्विध इह प्रतिभासमाने, श्रीतीर्थपूजनकृतप्रतिभासमेते ।
गन्धोदकैः पुनरपि प्रभवत्वजस्रं, स्नात्र जगत्त्रयगुरोरतिपूतधारैः ॥ १ ॥

इति जिनपादोपरि कलशाभिषेक विधाय स्नात्रनिवृत्तिः ॥ [ पचामृतस्नात्रयुक्तिस्तु

शान्तिकपौष्टिकप्रतिष्ठोपयोगितया वृद्धस्नात्रविधौ कथयिष्यते ॥ अर्हत्श्वेताम्बरमते पंचामृतस्नात्रविधिः शान्तिकादिषु भवति, नित्यपर्वस्नात्रं गन्धोदकैरेव ]

अथ दिक्पालपूजनम् । ततः पुष्पाञ्जलिं गृहीत्वा वृत्तम्—

इन्द्राग्ने यम निर्ऋते जलेश वायो वित्तेशेश्वरभुजगा विरंचिनाथ ।
संघटाधिकतमभक्तिभारभाजः स्नात्रेऽस्मिन् भुवनविभोः श्रियं कुरुध्वम् ॥१॥

इति स्नपनपीठपार्श्वस्थकल्पितदिक्पालपीठोपरि पुष्पाञ्जलिं क्षिपेत् । ततस्तत्पीठोपरि दिक्षु यथाक्रमं दिक्पालान् स्थापयेत् । तत एकैकं दिक्पालं प्रति पूजा । तत्र प्रथममिन्द्रं प्रति जलगन्धादि गृहीत्वा शिखरिणीवृत्तपाठः—

सुराधीश श्रीमन् सुदृढतरसम्यक्त्ववसते, शचीकान्तोपान्तस्थित विबुधकोट्या नतपद ।
ज्वलद्वज्राघातक्षपितदनुजाधीशकटक, प्रभोः स्नात्रे विघ्नं हर हर हरे पुण्यजयिनाम् ॥ १ ॥

ॐ शक्र ! इह जिनस्नात्रमहोत्सवे आगच्छ आगच्छ, इदं जलं गृहाण गृहाण, गन्धं गृहाण गृहाण, धूपं गृहाण गृहाण, दीपं गृहाण गृहाण, नैवेद्यं गृहाण गृहाण, विघ्नं हर हर, दुरितं हर हर, शान्तिं कुरु कुरु, तुष्टिं कुरु कुरु, पुष्टिं कुरु कुरु, ऋद्धिं कुरु कुरु, वृद्धिं कुरु कुरु स्वाहा । इति जल-गन्ध-पुष्पादिभिरिन्द्रपूजनम् ॥१॥

ततोऽग्निं प्रति—

वहिरन्तरतेजसा विदधत् कार्यकारणसंगतिम्। जिनपूजन आशुशुक्षिणो कुरु विघ्नप्रतिघातमञ्जसा ॥ १ ॥
( व्यपच्छदसिकवृत्तपाठः )

ॐ अग्ने इह जिनस्नात्रमहोत्सवे आगच्छ आगच्छ, इद जल० इत्यादि पूर्ववत् ॥ २ ॥ यम प्रति—

( वसन्ततिलकापाठः— )

दीप्ताजनप्रभ तनोतु च सनिकर्षं, वाहारिवाहन समुद्धर दडपाणे ।
सर्वत्र तुल्यकरणीय करस्थधर्म, कीनाश नाशय विपद्विशर क्षणेऽत्र ॥१॥

ॐ यम ! इह० शेष पूर्ववत् ॥ ३ ॥ निर्ऋतिं प्रति— ( आर्यापाठः )

राक्षसगणपरिवेष्टित चेष्टितमात्रप्रकाश हतशत्रो ।
स्नात्रोत्सवेऽत्र निर्ऋते नाशय सर्वाणि दुःखानि ॥ १ ॥

ॐ निर्ऋते ! इह० शेष पूर्ववत् ॥ ४ ॥ वरुण प्रति— ( स्रग्धरावृत्तपाठः— )

कल्लोलानीतलोलाधिककिरणगणस्फीतरत्नप्रपञ्च—प्रोद्भूतौर्वाग्निशोभ वरमकरमहापृष्ठदेशोक्तमानम् ।
चञ्चीरल्लिशृंगिप्रभृतिझषगणैरंचित वारुण नो, वर्ष्मच्छिन्द्यादपाय त्रिजगदधिपतेः स्नात्रसत्रे पवित्रे ॥१॥

ॐ वरुण ! इह० शेष पूर्ववत् ॥५॥ ततो वायु प्रति— ( मालिनीवृत्तपाठः— )

ध्वजपटकृतकीर्तिस्फूर्तिदीप्यद्विमान–प्रसृमरबहुवेगत्यक्तसर्वोपमान ।
इह जिनपतिपूजासन्निधौ मातरिश्वन्, नय नय समुदायं मध्यबाह्यातपानाम् ॥ १ ॥
ॐ वायो ! इह० शेषं पूर्ववत् ॥ ६ ॥ ततः कुबेरं प्रति– (वसन्ततिलकापाठः–)
कैलासवास विलसत्कमलाविलास, संशुद्धहास कृतदौस्थ्यकथानिरास ।
श्रीमत्कुबेर भगवन् स्नपनेऽत्र सर्व–विघ्नं विनाशय शुभाशुभ शीघ्रमेव ॥ १ ॥
ॐ कुबेर । इह० शेषं पूर्ववत् ॥ ७ ॥ ईशानं प्रति– (वसन्ततिलका–)
गंगातरंगपरिखेलनकीर्णवारि–प्रोद्यत्कपर्दपरिमण्डितपार्श्वदेशम् ।
नृत्यं जिनस्नपनहृष्टहृदः स्मरारे–र्विघ्नं हरतु सकलस्य जगत्त्रयस्य ॥ १ ॥
ॐ ईशान ! इह० शेषं पूर्ववत् ॥ ८ ॥ ततो नागान् प्रति– (वैतालीयपाठः–)
फणिमणिमहसा विभासमानाः कृतयमुनाजलसंश्रयोपमानाः ।
फणिन इह जिनाभिषेककाले बलिभवनादमृतं समानयन्तु ॥ १ ॥
ॐ नागा ! इह० शेषं पूर्ववत् ॥ ९ ॥ ब्रह्माणं प्रति– (द्रुतविलम्बितवृत्तम्– )
विशदपुस्तकशस्तकरद्वयः प्रथितवेदतया प्रमदप्रदः ।
भगवतः स्नपनावसरे चिरं, हरतु विघ्नभयं द्रुहिणो विभुः ॥ १ ॥

ॐ ग्राम्न् इद० शेष पूर्ववत् ॥ १०॥ इत्य क्रमेण दिक्पालपूजनम् ॥

अथ ग्रहपूजनम्– ततः पुनरपि पुष्पाञ्जलिं करे गृहीत्वा– आर्यावृत्तपाठः–

दिनकरहिमकरभूसुत–शशिसुतबृहतीशकाव्यरवितनयाः ।
राहो केतो गवेत्रपाल जिनस्यार्चने भवत सन्निहिताः ॥ १ ॥

इति ग्रहपीठोपरि पुष्पाञ्जलिं क्षिपेत् । ततः पूर्वादिक्रमेण सूर्य–शुक्र–मङ्गल–राहु–शनि–चन्द्र–बुध–बृहस्पतीन् ग्रहान् स्थापयेत् । अधः केतुम् उपरि क्षेत्रपालं च स्थापयेत् । ततः सूर्यं प्रति– ( वसन्ततिलकावृत्तपाठः– )

विश्वप्रकाश कृतभव्यशुभावकाश ध्वान्तप्रतानपरितापन सद्विकाश ।
आदित्य नित्यमिह तीर्थकराभिषेके कल्याणपद्धनमाकलय प्रयत्नात् ॥ १ ॥

ॐ सूर्य ! इद० शेष पूर्ववत् ॥ १ ॥ शुक्र प्रति– ( मालिनीवृत्तपाठः– )

स्फटिकधवलशुद्धध्याननिर्घ्नपाप, प्रमुदितदितिपुत्रोपास्यपादारविन्द ।
त्रिभुवनजनभव्यजन्तुजीवातुविध, प्रथय भगवतोऽर्चां शुक्र हे वीतविघ्नाम् ॥ १ ॥

ॐ शुक्र ! इद० शेषं पूर्ववत् ॥ २ ॥ भौम प्रति— ( आर्यापाठः– )

प्रबलनलमितिनकुशल–लालनाललितकान्तिसहिते ।
भौम जिनस्नपनेऽस्मिन् विघटय विघ्नागमं सर्वम् ॥ १ ॥

ॐ मङ्गल ! इह० शेषं पूर्ववत् ॥ ३ ॥ राहुं प्रति– ( श्लोकपाठः– )

अस्तांहः सिंहसंयुक्त, रथविक्रममन्दिर ।
सिंहिकासुत पूजाया–मत्र सन्निहितो भव ॥ १ ॥

ॐ राहो ! इह० शेषं पूर्ववत् ॥ ४ ॥ शनिं प्रति–

फलिनीदलनीललीलयान्तः स्थगितसमस्तवरिष्ठविषजात ।
रवितनय नय प्रबोधमेतान् जिनपूजाकरणैकसावधानान् ॥ १ ॥

ॐ शने ! इह० शेषं पूर्ववत् ॥ ५ ॥ चन्द्रं प्रति– ( द्रुतविलम्बितवृत्तपाठः– )

अमृतवृष्टिविनाशितसर्वदो–पचितविघ्नविषः शशलांछनः ।
वितनुतां तनुतामिह देहिनां प्रसृततापकरस्य जिनार्चने ॥ १ ॥

ॐ चन्द्र ! इह० शेषं पूर्ववत् ॥ ६ ॥ बुधं प्रति–वृत्तम्–

बुध विबुधगणार्चितांघ्रियुग्म प्रमथितदैत्यविनीतदुष्टशास्त्र ।
जिनचरणसमीपगोऽधुना त्वं रचय मतिं भवघातनप्रकृष्टाम् ॥ १ ॥

ॐ बुध ! इह० शेषं पूर्ववत् ॥ ७ ॥ गुरुं प्रति– वृत्तम्–

सुरपतिहृदयावतीर्णमंत्र, प्रचुरकलाविकलप्रकाश भास्वन् ।
जिनपतिचरणाभिषेककाले, कुरु बृहतीवर निम्नप्रणाशम् ॥ १ ॥

ॐ गुरो ! इह शेप पूर्ववत् ॥ ८ ॥ केतु प्रति— ( द्रुतविलम्बितवृत्तपाठः— )

निजनिजोदययोगजगत्रयी, कुशलविस्तरकारणता गतः ।
भवतु केतुरनश्वरसम्पदा सततहेतुरनारितविक्रमः ॥ १ ॥

ॐ केतो ! इह० शेप पूर्ववत् ॥ ९ ॥ क्षेत्रपाल प्रति— (आर्या)

कृष्णासितकपिलवर्ण—प्रकीर्णकोपासिताङ्घ्रियुग्म सदा ।
श्रीक्षेत्रपाल पालय, भविकजनं विघ्नहरणेन ॥ १ ॥

ॐ क्षेत्रपाल ! इह शेप पूर्ववत् ॥१०॥ इति ग्रह—क्षेत्रपालपूजा ॥ ( विद्यादेवता—शासनयक्ष—यक्षिणी—सुरलोकाधिपूजन बृहत्स्नात्रविधौ कथयिष्यते प्रतिष्ठाशातिकपौष्टिकोपयोगित्वात् )। ततो जिनप्रतिमाया गन्धपुष्पाक्षतधूपदीपपूजा पूर्वमन्त्रैरेव ( "इद गन्धं०" गन्धपूजा, "नानावर्णं०" पुष्पपूजा, "प्रीणन०" अक्षतपूजा, "श्रीखण्डा०" धूपपूजा, "पञ्चज्ञान०" दीपपूजा, मन्त्र पृष्ठे ६ । ततः करे वस्त्र गृहीत्वा— (वसन्ततिलकावृत्तपाठः— )

त्यक्ताखिलार्थवनितासुतभूरिराज्यो, निःसंगतामुपगतो जगतामधीशः ।
भिक्षुर्भवन्नपि स वर्ष्मणि देवदूष्य–मेकं दधाति वचनेन सुरासुराणाम् ॥ १ ॥

इति वस्त्रपूजा । ततो नानाविध–खाद्य–पेय–चूष्य-लेह्य–संयुतं–नैवेद्यं स्थालद्वये विधाय, एकं पात्रं जिनाग्रतः संस्थाप्य श्लोकपाठः–

सर्वप्रधानसद्भूत, देहि देहं सुपुष्टिदम्। अन्नं जिनाग्रे रचितं, दुःखं हरतु नः सदा ॥ १ ॥

इति जलचुलुकेन प्रतिमाया नैवेद्यदानम् । ततो द्वितीयपात्रे–

भोः भोः सर्वे लोकपालाः सम्यग्दृशः सुराः । नैवेद्यमेतद् गृह्णन्तु भवन्तो भयहारिणः ॥ १ ॥

इति ग्रहदिक्पालादीनां जलचुलुकेन नैवेद्यदानम् । स्नपनं विनापि पूजायां जिनप्रतिमानैवेद्यदानमनेनैव मंत्रेण । ततः सप्तवर्तिकावदारात्रिकं मंगलदीपश्च पूर्ववत् । "सप्तभीति०"। "विश्वत्रय०"। शक्रस्तवश्च । यस्याः प्रतिमायाः स्नानस्थितायाः स्नपनं भवति तस्याः सर्वमपि तत्रैव क्रियते। ततो धूपं गृहीत्वा–

श्रीखंडकर्पूरकुरंगनाभि–प्रियंगुमांसीनतकाकतुंडैः।
जगत्त्रयस्याधिपतेः सपर्या–विधौ विदध्यात् कुशलानि धूपः ॥ १ ॥

अनेन वृत्तेन सर्वपुष्पाञ्जलीनामंतराले धूपोत्क्षेपः शक्रस्तवपाठश्च । ततः प्रतिमाविसर्जनम् । तन्मंत्रो यथा–

ॐ अर्हं नमो भगवतेऽर्हते समये पुनः पूजां प्रतीच्छ स्वाहा। इति पुष्पन्यासेन प्रतिमाविसर्जनम्। ततः पुष्प गृहीत्वा—

ॐ हूः इन्द्रादयो लोकपालाः सूर्यादयो ग्रहाः सक्षेत्रपालाः सर्वदेवाः सर्वदेव्यः पुनरागमनाय स्वाहा। इति पुष्पपूजादिभिर्ग्रहदिक्पालविसर्जनम्। ततः—

आज्ञाहीन क्रियाहीनं मन्त्रहीनं च यत्कृतम्। तत्सर्वं कृपया देवाः क्षमन्तु परमेश्वराः ॥ १ ॥

आवाहन न जानामि न जानामि विसर्जनम्। पूजा चैव न जानामि त्वमेव शरणं मम ॥ २ ॥

कीर्तिं श्रियो राज्यपदं सुरत्वं न प्रार्थये किंचन देवदेव। मत्प्रार्थनीय भगवन् प्रदेयं त्वद्दासता मा नय सर्वदापि ॥३॥

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता।
क्षमस्व त नाथ कुरु प्रसाद, प्रायो नराः स्युः प्रचुरप्रमादाः ॥ १ ॥

इति सर्वकरणीयान्ते जिनप्रतिमादेवादिविसर्जनविधिः। अर्हदर्चनविधावपि एव विसर्जन ज्ञेयम्।

॥ इति लघुस्नात्रविधिः ॥ आचारदिनकर पृ. ६१—६६ ॥ इति प्रथमदिने प्रातः करणीयो विधिः ॥

卐卐卐

# अथ पञ्चत्रिंशतिकुसुमाञ्जलयः

( प्रथमदिने मध्याह्ने पूर्वं पृष्ठ २ तः पृष्ठ ८ इति जिनपूजनम्। तत्पर्यंतं पूजनविधिं विधाय तत्पश्चात् कुसुमाञ्जलिक्षेपं विदध्यात् )

ततः श्राद्धः स्नानपीठं प्रक्षाल्य स्वयं स्नातानुलिप्तः शुचिवस्त्रधारी कङ्कणस्वर्णमुद्रांकितहस्तो जिनोपवीतोत्तरासंगधरः उत्तरासंगवसनेन मुखमाच्छाद्य चलस्थिरप्रतिमाया अग्रतः स्थित एकाकी द्वित्रिचतुष्पंचयुतो वा सर्वैः समं करसंपुटे कुसुमाञ्जलिं निधायेति पठेत्—

लक्ष्मीरद्यानवद्यप्रतिभपरिनिगद्याद्यपुण्यप्रकर्षो—त्कर्षैराकृष्यमाणा करतलमतुलारोहमारोहति स्म ।
शश्वद्विश्वातिविश्वोपशमविशदतोल्लासविस्मापनीयं, स्नात्रं सुत्रामयात्राप्रणिधिजिनविभोर्यत्समारब्धमेतत् ॥१॥
कल्याणोल्लासलास्यप्रसृमरपरमानन्दकन्दायमानं, मन्दामन्दप्रबोधप्रतिनिधिकरुणाकारकं दायमानम् ।
स्नात्रं श्रीतीर्थभर्तुर्घनसमयमिवात्मार्थकं दायमानं, दद्याद् भक्तेषु पापप्रशमनमहिमोत्पादकं दायमानम् ॥२॥
देवादेवाधिनाथप्रणमननवनानन्तसानन्तचारि, प्राणप्राणावयानप्रकटितविकटव्यक्तिभक्तिप्रधानम् ।

शुक्ल शुक्ल च किंचिचिदधिगमसुख सत्सुखं स्नात्रमेत-
न्नन्यान्नन्यात् प्रकृष्ट दिशतु शमनता सन्निधान निधानम् ॥ ३ ॥
विश्वान् सभाव्यलक्ष्मीः क्षपयति दुरित दर्शनादेव पुसा-
मासन्नो नास्ति यस्य त्रिदशगुरुरपि प्राज्यराज्यप्रभावे ।
भावान्निर्मुच्य शोच्यानजनि जिनपतिर्यः समायोगयोगी,
तस्येय स्नात्रवेला कलयतु कुशलं कालधर्मा प्रणाशः ॥ ४ ॥
नालीक यन्मुखस्योपमितिमलभत् क्वापि वार्तान्तराले,
नालीक येन किंचित् प्रवचन उदित शिष्यपर्षत्समक्षम् ।
नालीकं चापशक्त्या व्यरचयत न वै यस्य सद्रोहमोह,
नालीकं तस्य पादप्रणतिविरहित नोऽस्तु तत्स्नात्रकाले ॥ ५ ॥ (स्रग्धरा०)

अनेन वृत्तपञ्चकेन कुसुमाञ्जलिक्षेपः । ततश्चन्दन गृहीत्वा-

फणिनिकरविवेष्टनेऽपि येनोज्झितमतिशैत्यमनारत न किंचित् ।
मलयशिखरिशेखरायमाण तदिद चन्दनमर्हतोऽर्चने स्युः ॥ १ ॥

अनेन वृत्तेन चन्दनचर्चनम् । ततः शक्रस्तवपाठः । ततो धूप गृहीत्वा—

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्षात्, प्रौढिप्राप्तप्रकर्षः क्षितिरुहरसजः क्षीणपापावगाहः ।
धूपोऽकूपारकल्पप्रभवमृतिजराकष्टविस्पष्टदुष्ट—स्फूर्जत्संसारपाराधिगममतिधियां विश्वभर्तुः करोतु ॥ १ ॥

अनेन स्रग्धरावृत्तेन सर्वकुसुमांजल्यन्तरालेषु बिम्बस्य धूपदानम् । पुनः कुसुमाञ्जलिं गृहीत्वा—(२)

कल्पायुः स्थितिकुंभकोटिविटपैः सर्वैस्तुरापाङ्गणैः, कल्याणप्रतिभासनाय विततप्रव्यक्तभक्त्यानतैः ।
कल्याणप्रसरैः पयोनिधिजलैः शक्त्याभिषिक्ताश्च ये, कल्याणप्रभवाय सन्तु सुधियां ते तीर्थनाथाः सदा ॥१॥

रागद्वेषजविग्रहप्रमथनः संक्लिष्टकर्मावली, विच्छेदादपविग्रहः प्रतिदिनं देवासुरश्रेणीभिः ।
सम्यक् चर्चितविग्रहः सुतरसा निर्धूतमिथ्यात्वदृक्, तेजः क्षिप्तपविग्रहः स भगवान् भूयाद् भवोच्छित्तये ॥२॥

संक्षिप्ताश्रवविक्रियाक्रमणिकापर्युल्लसत्संवरं, षण्मध्यप्रतिवासिवैरिजलधिप्रष्टंभने संवरम् ।
उद्यत्कामनिकामदाहहुतभुग्विध्यापने संवरं वन्दे श्रीजिननायकं मुनिगणप्राप्तप्रशं संवरम् ॥३॥

श्रीतीर्थेश्वरमुत्तमैर्निजगुणैः संसारपाथोनिधेः, कल्लोलप्लवमानवप्रवरता सन्धानविध्यापनम् ।
वन्देऽनिन्द्यसदागमार्थकथनप्रौढप्रपंचैः सदा, कल्लोलप्लवमानवप्रवरता सन्धानविध्यापनम् ॥ ४ ॥

स्नात्रं तीर्थपतेरिदं सुजनताखानिः कलालालसं, जीवातुर्जगतां कृपाप्रथनकृत् क्लृप्तं सुराधीश्वरैः ।
अंगीकुर्म इदं भवाच्च बहुलस्फूर्तैः प्रभावैर्निजैः, स्नात्रं तीर्थपतेरिदं सुजनताखानिः कलालालसम् ॥ ५ ॥

( शार्दूल० )

प्रथमदिने
मध्याह्ने
करणीयः

अनेन वृत्तपञ्चकेन कुसुमाञ्जलिप्रक्षेपः । ततः कुङ्कुमं गृहीत्वा—

दूरीकृतो भगवता रससश्रयो यो, ध्यानेन निर्मलतरेण स एव राग. ।
मुक्त्यै सिसेविपुरमु जगदेकनाथ–मंगे निभाति निवसन् घुसृणच्छलेन ॥१॥

इति कुङ्कुमार्चनम् । ततः शक्रस्तवपाठः । ततः ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः । पुनः कुसुमाञ्जलिं गृहीत्वा—(३)

प्रभोः पादद्वन्द्वे नितणरसुधाभुक् शिखरिणी, वसभूतश्रेयोहरिमुकुटमाला शिखरिणी ।
विभाति प्रश्लिष्टा समुदयकथा वै शिखरिणी, नतेजः पूंजाढ्या सुखरसनकान्त्या शिखरिणी ॥१॥
जगद्वन्द्या मूर्तिः प्रहरणविकारैश्च रहिता, निशाला ता मुक्ति सपदि सुददाना विजयते ।
निशालाता मुक्ति सपदि सुददाना विजयते, दधाना ससारच्छिदुरपरमानन्दकलिता ॥२॥
भनाभाससार सदिहरणकम्प प्रतिनयत्, कलाल वः कान्तप्रगुणगणनासादकरणः ।
भवाभासंसार सदिहरणकम्प प्रतिनयत्, कलाल वः कान्तप्रगुणगणनासादकरणः ॥३॥
जय जीन भानु वलिनमनिस सगत इला–विलास' सत्कालक्षितिरलसमानो विसरणे ।
जय जीन भानुं मलिनमनिस सगत इला–विलासः सत्कालक्षितिरलसमानो विसरणे ॥४॥
अमाद्यद्वेषोऽर्हन् नवनमनतिक्रान्तकरणै–रमाद्यद्वेषोऽर्हन् नवनमनतिक्रान्तकरणैः ।
सदा रागत्यागी विलसदनघो विमथनः, सदा रागत्यागी विलसदनघो विमथनः ॥५॥ (शि०)

इति वृत्तपञ्चकेन कुसुमाञ्जलिक्षेपः ततो यक्षकर्दमं गृहीत्वाः—

घ्राणतर्पणसमर्पणापटुः क्लृप्तदेवघटनागवेपणः । यक्षकर्दम इनस्य लेपनात्, कर्दमं हरतु पापसंभवम् ॥१॥

बिम्बस्य यक्षकर्दमविलेपनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः पुनः कुसुमाञ्जलिं गृहीत्वा–(४)

आनन्दाय प्रभव भगवन्नंगसङ्गावसान आन्ददाय प्रभव भगवन्नंगसङ्गावसान ।
आनन्दाय प्रभव भगवन्नंगसङ्गावसान आनन्दाय प्रभवभगवन्नंगसङ्गावसान ॥ १ ॥

लाभप्राप्तप्रसृमरमहाभागनिर्मुक्तलाभं देवव्रातप्रणतचरणांभोज हे देवदेव ।
जातं ज्ञानं प्रकटभुवनत्राससञ्जंतुजातं हंसश्रेणीधवलगुणभा सर्वदा जातहंस ॥ २ ॥

जीवन्नंतर्विपमविपयच्छेदक्लृप्तासिधार जीवस्तुत्यप्रथितजननांभोनिधौ कर्णधार ।
जीवप्रौढिप्रणयनमहासूत्रणासूत्रधार जीवस्पर्धारहितशिशिरेन्दोपमेयाव्दधार ॥ ३ ॥

पापाकांक्षामथनमथनप्रौढविध्वंसिहेतो क्षान्त्याद्यास्थानिलयनिलयश्रान्तिसंप्राप्ततत्त्व ।
साम्यक्राम्यन्नयननयनव्याप्तिजातावकाश स्वामिन्नन्दाशरणशरणप्राप्तकल्याणमाल ॥ ४ ॥

जीवाः सर्वे रचितकमल त्वां शरण्यं समेताः क्रोधाभिख्याज्वलनकमलक्रान्तविश्वारिचक्रम् ।
भव्यश्रेणिनयनकमल प्राग्विबोधैकभानो मोहासौख्यप्रजनकमलच्छेदमस्मासु देहि ॥ ५ ॥

( मन्दाक्रान्ता० )

इति वृत्तपञ्चकेन पुष्पाञ्जलिक्षेपः। ततः कर्पूरं गृहीत्वा—

निरामयत्वेन मलोज्झितेन गन्धेन सर्वप्रियताकरेण। गुणैस्त्वदीयातिशयानुकारी नराङ्गमागच्छतु देवचन्द्रः ॥१॥

बिम्बे कर्पूरारोपणम्। ततः शक्रस्तवः। ऊर्ध्वाधो॰ वृत्तेन धूपोत्क्षेपः। पुनः कुसुमाञ्जलिं गृहीत्वा—(५)

संसारवारिनिधितारण देवदेव ! संसारनिर्जितसमस्तसुरेन्द्रशैल।

संसारबन्धुरतया जिनराजहंस संसारमुक्त कुरु मे प्रकटं प्रमाणम् ॥ १ ॥

रोगादिमुक्तकरणप्रतिभाविलास कामप्रमोदकरणव्यतिरेकघातिन्।

पद्माष्टमादिकरणप्रतपप्रवीण मां रक्ष पातकरणश्रमकीर्णचित्तम् ॥ २ ॥

त्वां पूजयामि कृतसिद्धिरमाविलास नम्रक्षितीश्वरसुरेश्वरसद्विलासम्।

उत्पन्नकेवलकलापरिभाविलासं ध्यानाभिधानमकरुद्धवदनाविलासम् ॥ ३ ॥

गम्यातिरेकगुणपापतरावगम्या न व्याप्नुते विषयराजिरपारनव्या।

सेवाभरेण भवतः प्रकटेरसेवा तृष्णा कुतो भवति तुष्टिमता च तृष्णा ॥ ४ ॥

वन्दे त्वदीयव्यपदेशनसद्म देव जीवातुलक्षितिमनन्तरमानिवासम्।

आत्मीयमानकृतयोजनविस्तराढ्य जीवातुलक्षितिमनन्तरमाविलासम् ॥ ५ ॥ (वसन्ततिलका॰)

इति पुष्पाञ्जलिक्षेपः । ततो वासं गृहीत्वा—
नैर्मल्यशालिन इमेऽप्यजडा अपिंडा संप्राप्तसद्गुणगणा विपदां निरासाः ।
त्वद्ज्ञानवज्जिनपते कृतमुक्तिवासा वासा पतन्तु भविनां भवदीयदेहे ॥ १ ॥
इति वासक्षेपः विम्बे । ततः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा—(६)
सुरपतिपरिक्लृप्तं त्वत्पुरो विश्वभर्तुः, कलयति परमानन्दक्षणं प्रेक्षणीयम् ।
न पुनरधिकरागं शान्तचित्ते विधत्ते, कलयति परमानन्दक्षणं प्रेक्षणीयम् ॥ १ ॥
सदयसदयवार्त्तानिर्तितामर्त्यहर्षा, विजयविजयपूजाविस्तरे सन्निकर्षा ।
विहितविहितबोधा देशना ते विशाला, कलय कलयसुर्च्चैर्मन्यनत्यार्द्रचित्ते ॥ २ ॥
विरचितमहिमानं माहिमानन्दरूपं, प्रतिहतकलिमानं कालिमानं क्षिपन्तम् ।
जिनपतिमभिवन्दे माभिवन्देतिघातं, सुविशदगुणभारं गौणभारंगसारम् ॥ ३ ॥
सुभवभृदनुकम्पानिर्विशेषं विशेषं, क्षपितकलुषसंघातिप्रतानं प्रतानम् ।
पदयुगमभिवन्दे ते कुलीनं कुलीनं, उपगतसुरपर्षत्सद्विमानं विमानम् ॥ ४ ॥
कीरणकीरणदीप्तिर्विस्तरागोतिरागो, विधृतविधुतनूजाक्षान्तिसाम्योऽतिसाम्यः ।
विनयविनययोग्यः संपरायो परायो, जयति जयतिरोधानैकदेहः सुदेहः ॥ ५ ॥ (मालिनी०)

इति पुष्पाञ्जलिः । ततो मृगमदलेप गृहीत्वा —

श्रितफणिपतिभोगः क्लृप्तसर्वांगयोगः श्लथितसद्दृढरोगः श्रेष्ठिना सोपभोगः ।
सुखपुषितरोगः सर्वसपन्नभोग स्फुटमृगमदभोगः सोऽस्तु सिद्धोपयोगः ॥ १ ॥

इति विम्बे मृगमदलेपः । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—(७)

यशश्चारशुभीकृतानेकलोकः, सुसिद्धान्तसतर्पितच्छेकलोकः ।
महातत्त्वविज्ञायिसवित्कलोकः प्रतिक्षिप्तकर्मारिविपाकलोकः ॥ १ ॥

विमानाधिनाथस्तुताघ्रिद्वयश्री—विमानातिरेकाशयः काशकीर्तिः ।
विमानाग्रकार्शर्महोभिः परीतो, विमानायिकैर्लक्षितो नैन किंचित् ॥ २ ॥

क्षमासाधनानन्तकल्याणमालः, क्षमासज्जनानन्तनन्द्याघ्रियुग्मः ।
जगद्भाननानन्तविस्तारितेजाः, जगद्व्यापनानन्तपूः सार्थनाहः ॥ ३ ॥

वपुः सङ्कर सङ्कर खंडयन्ति, महासयमं सयम संतनोति ।
कलालालसं लालस तेजसे त, सदा भावन भावन स्थापयामि ॥ ४ ॥

विशाल पर सयमस्थं विशाल विशेप सुविस्तीर्णलक्ष्मीविशेपम् ।
नयानन्दरूप स्वभक्तान्नयान, जिनेश स्तुत स्तौमि देव जिनेशम् ॥ ५ ॥ (भुजङ्गप्रयात०)

इति पुष्पाञ्जलिक्षेपः ततः कालागरुलेपं गृहीत्वा वृत्तम्—

देवादेवाद्यभीष्टः परमपरमहानन्ददातादाता, कालः कालप्रमाथी विशरविशरणः सङ्गतश्रीगतश्रीः ।
जीवाजीवाभिमर्शः कलिलकलिलताखंडनार्होऽडनार्हो, द्रोणाद्रोणास्यलेपः कलयति लयतिग्मापवर्गं पगर्गम् ॥१॥

बिम्बे कालागरुलेपः । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा—(८)

विधूतकर्माखिलः सनातनो, विभूतहारावलितुल्यकीर्तिभाक् ।
प्रयोगमुक्तातिशयोर्जितस्थितिः, प्रयोगशाली जिननायकः श्रिये ॥ १ ॥
सुपुण्यसंदानितकेशवप्रियः, सदैव संदानितपोविधानकः ।
सुविस्तृताशोभनवृत्तिरेन्द्रक—स्तिरस्कृताशोभनपापतापनः ॥ २ ॥
स्थिता ततिः पुण्यभृतां क्षमालया, पुरोपि यस्य प्रथिताक्षमालया ।
तमेव देवं प्रणमामि सादरं, पुरोपचीर्णेन महेन सादरम् ॥ ३ ॥
कलापमुक्तव्रतसंग्रहक्षमः कलापदेवासुरवन्दितक्रमः ।
कलापवादेन विवर्जितो जिनः, कलापमानं वितनोतु देहिषु ॥ ४ ॥
निदेशसंभावितसर्वविष्टपः, सदाप्यदं भावितदस्युसंहतिः ।
पुराजनुर्भावितपोमहोदयः, सनामसंभावितसर्वविष्टपः ॥ ५ ॥ (वंशस्थ०)

इति पुष्पाञ्जलिक्षेपः ।

विभूषणोऽप्यद्भुतकान्तविक्रमः, सुरूपशाली स्तुतमीरुविक्रमः ।
जिनेश्वरो भात्यनघो रविभ्रमः, प्रमाथकारी महसातिविभ्रमः ॥ १ ॥

इति विम्बात् पुष्पालङ्कारावतारणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पा०—(९)

प्रासङ्गतास जिननाथचेष्टित, प्रासङ्गमत्यद्भुतमोक्षवर्त्मनि ।
प्रासङ्गता त्यक्तभवाश्रयाशये, प्रासङ्गवीराघभिदे नमामि ते ॥ १ ॥

कल्याणकल्याणकपञ्चकस्तुतः, सभारसभारमणीयविग्रहः ।
सन्तानसन्तानवसंश्रितस्थितिः, कन्दर्पकन्दर्पभराजयेज्जिनः ॥ २ ॥

विश्वान्धकारैककरापवारणः, क्रोधेभविस्फोटकरापवारणः ।
सिद्धान्तविस्तारकरापवारणः, श्रीवीतरागोऽस्तु करापवारणः ॥ ३ ॥

सभिन्नसभिन्ननयप्रमापणः, सिद्धान्तसिद्धान्तनयप्रमापणः ।
देवाधिदेवाधिनयप्रमापणः, संजातसजातनयप्रमापणः ॥ ४ ॥

कालापयान कलयत्कलानिधिः, कालापरश्लोकचिताखिलक्षितिः ।
कालापवादोज्झितसिद्धिसंगतः, कालापकारी भगवान् श्रियेऽस्तु नः ॥ ५ ॥ (इन्द्रवंशा०)

अनेन वृत्तपञ्चकेन पुष्पाञ्जलिक्षेपः पीठक्षालनजलं गृहीत्वा—

प्रकृतिभासुरभासुरसेवितो, धृतसुराचलराचलसंस्थितिः ।
स्नपनपेषणपेषणयोग्यतां, वहतु संप्रति संप्रतिविष्टरः । ॥ १ ॥

इति स्नपनपीठक्षालनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पाञ्जलिं गृहीत्वा—(१०)

निहितसत्तमसत्तमसंश्रयं, ननु निरावरणं वरणं श्रियाम् ।
धृतमहः करणं करणं धृते—र्नमत लोकगुरुं कगुरुं सदा ॥ १ ॥

सदभिनन्दननन्दनशैत्यको, जयति जीवनजीवनशैत्यभाक् ।
उदितकंदलकंदलखंडनः, प्रथितभारतभारतदेशनः ॥ २ ॥

वृषविधापनकार्यपरंपरा, सुसदनं सदनं चपलं भुवि ।
अतिवसौ स्वकुले परमे पदे, दकमलं कमलं कमलं भुवि ॥ ३ ॥

तव जिनेन्द्र विभाति सरस्वती, प्रवरपारमिता प्रतिभासिनी ।
न यदुपांतगताऽवति बुद्धगीः, प्रवरपारमिता प्रतिभासिनी ॥ ४ ॥

सदनुकम्पनकम्पनवर्जित, द्रुतविकारणकारण सौहृद ।
जय कृपावनपावन तीर्थकृत्, विमलमानसमानससद्यशः ॥ ५ ॥ (द्रुतविलम्बित०)

प्रथमदिने
मध्याह्ने
करणीयः

इति पुष्पाञ्जलिक्षेपः। ततो बिम्बमार्जनमत्र गृहीत्वा—

न हि मलभरो विश्वस्वामिंस्त्वदीयतनौ क्वचिद्, विदितमिति च प्राज्ञैः पूर्वैरथाप्यधुनाभवैः।
स्नपनसलिल स्पृष्ट सद्भिर्महामलमान्तरं, नयति निधनं मार्ज्यं बिम्ब वृथा तव देव हि ॥१॥ (हरिणी)

इति बिम्बमार्जनम्। पुनः शक्रस्तवपाठः ऊर्ध्वाधो०। वृत्तेन धूपः। पुनः पुष्पाञ्जलिं गृहीत्वा—(११)

सवरः प्रतिनियुक्तसंवरो, विग्रहः प्रकमनीयनिग्रहः। सयतः सकलुषैरसयतः, पङ्कहृद्दिशतु शातिपङ्कहृत् ॥१॥
जभजित् प्रणतखरजभजित्, सङ्गतः शिवपद सुसङ्गतः।
जीवनः सपदि सर्वजीवनो, निर्वृतिर्मनिकदत्तनिर्वृतिः ॥ २ ॥
निर्जरप्रतिनुतश्च निर्जरः, पावनः श्रितमहात्रपावनः।
नायको जितदयाविनायको, हसगः सविनयोरुहसगः ॥ ३ ॥
धारितप्रवरसत्कृपाशयः, पाशयष्टिधरदेवसस्तुतः। संस्तुतो दमवता सनातनो नातनः कुगतिमंगभृन्मुधा ॥४॥
लोभकारिपरिमुक्तभूषणो, भूषणो विगतसर्वपातकः।
पातकः कुमनसा महाबलो, हाबलोपकरणो जिनः श्रिये ॥ ५ ॥ (रथोद्धता०)

इति पुष्पाजलिक्षेपः ततः पुष्प गृहीत्वा—

कार्यं कारणमीश सर्वभुवने युक्त दरीदृश्यते। त्वत्पूजाविषये द्वय तदपि न प्राप्नोति योगं क्वचित्।

यस्मातुष्पममीभिरर्चकजनैस्त्वन्मस्तके स्थाप्यते, तेषामेव पुनर्भवी शिवपदे स्फीतं फलं प्राप्नुयात् ॥१॥

इति विम्बशिरसि पुष्पारोपणम्। शक्रस्तवः। ऊर्ध्वाधो० वृत्तेन धूपश्च। पुनः पुष्पाञ्जलिं गृहीत्वा–(१२)

महामनोजन्मिनिषेव्यमाणो, नन्याययुक्तोत्थिव एव मर्त्यैः।
महामनोजन्मिनिकृन्तनश्च, नन्याययुग्रक्षिततीर्थनाथः ॥ १ ॥

कामानुयाता निधनं विमुंचन्, श्रियानुलापावरणं विहाय।
गतो विशेषान्निधनं पदं यः, स दुष्टकर्मावरणं भिनत्तु ॥ २ ॥

मृदुत्वसंत्यक्तमहाभिमानो, भक्तिप्रणम्रोरुसहस्रनेत्रः।
अंभोजसंत्यक्तमहाभिमानः, कृतार्थतात्मस्मृतिघस्रनेत्रः ॥ ३ ॥

समस्तसंभावनया वियुक्त–प्रतापसंभावनयाभिनन्दन्।
अलालसंभावनया न कांक्षी, वरिष्ठसंभावनया न कांक्षी ॥ ४ ॥

समस्तविज्ञानगुणावगन्ता, गुणावगन्ता परमाभिरामः।
रामाभिरामः कुशलाविसर्पः, शिलाविसर्पो जयताज्जिनेन्द्रः ॥ ५ ॥ (उपजाति०)

पुष्पाञ्जलिक्षेपः। ततः फलानि गृहीत्वा—

रम्यैरनन्तगुणपङ्रसशोभमानैः, सद्वर्णवर्णिततमैरमृतोपमेयैः ।
स्वाङ्गैस्वाद्यफलविस्तरणैर्जिनार्चा—मर्चामि वर्चसि परैः कृतनित्यचर्चः ॥ १ ॥

बिम्बाग्रे फलढौकनम् । पुनः शक्रस्तव. । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुन. पुष्पाञ्जलिं गृहीत्वा—(१३)

करवालपातरहिता जयश्रिय, करवालपातरहिता जयश्रियम् ।
विनयन्नयापदसुचारिसयमो, विनयन्नयापदसुचारिसंयमः ॥ १ ॥

इनमन्धतामसहर सदासुखं, प्रणमामि कामितफलप्रदायकम् ।
इनमन्धतामसहरं सदासुख, विजये च तेजसि परिष्ठितं चिरम् ॥ २ ॥

निजभावचौरदमनं दयानिधिं, दमन च सर्वमुनिमंडलीवृतम् ।
मुनिमजसा भवसत्पयोनिधौ, विलसत्कवीर्यसहित नमामि तम् ॥ ३ ॥

बहुलक्षणौघकमनीयविग्रहः, क्षणमात्रभिन्नकमनीयविग्रहः ।
कमनीयविग्रहपदावतारणो, भवसुक्तमुक्तकुपदावतारणः ॥ ४ ॥

सुरनाथमानहरसपदञ्चितः, क्षतराजमानहरहासकीर्तिभाक् ।
विगतोपमानहरणोद्धृताशयो, विगताभिमानहरवध्यशातनः ॥ ५ ॥ (सन्धिवर्पिणी०)

इति पुष्पाञ्जलिः । अगरुं गृहीत्वा—

धाराधाराभिमुक्तोद्रसबलसबले क्षोदकाम्यादकाम्या, भिक्षाभिक्षाविचारस्वजनितजनितप्रातिमानोऽतिमानः ।
प्राणप्राणप्रमोदप्रणयननयनं धातहंधातहन्ता, श्रीदः श्रीदप्रणोति स्वभवनभवनः काकतुंडाकतुंडाः ॥ १ ॥

इत्यगरुक्षेपः । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—(१४)

ज्ञानकेलिकलितं गुणनिलयं, विश्वसाररचितं गुणनिलयम् ।
कामदाहदहनं परमम्रृतं स्वर्गमोक्षसुखदं परमम्रृतम् ॥ १ ॥

स्वावबोधरचनापरमहितं, विश्वजन्तुनिकरे परमहितम् ।
रागसङ्गिमनसां परमहितं, दुष्टचित्तसुमुचां परमहितम् ॥ २ ॥

भव्यभावजनतापविहननं, भव्यभावजनतापविहननम् ।
जीव जीव भवसारविनयनं, जीव जीव भवसारविनयनम् ॥ ३ ॥

कालपाशपरिघातबहुलं, कालपाशकृतहारविहरणम् ।
नीलकंठसखिसन्निभनादं, नीलकंठहसितोत्तमशयनम् ॥ ४ ॥

न्यायबन्धुरविचारविलसनं, लोकबन्धुरविचारसुमहसम्
शीलसारसनवीरतनुधरं, सर्वसारसनवीरमुपनये ॥ ५ ॥ ( जगतिजाति० )

पुष्पाञ्जलिः । वाससयुक्त धूपं गृहीत्वा—

विनयविनयवाक्य—स्फारयुक्तोरयुक्तः, पुरुपपुरुपकाराद् भावनीयोवनीयः ।
जयतु जयतुपारो दीप्रमादे प्रमादे, सपदि सपदि भक्ता वासधूपः सधूपः ॥ १ ॥

इति वासयुक्तधूपोत्क्षेपणम् । शक्रस्तवः ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा— (१५)

आततायिनिकर परिनिम्नन्नाततायिचरितः परमेष्ठी । एकपादरचनासुकृताशी—रेकपाददयिताकमनीयः ॥१॥
वर्पदानकरभाजितलक्ष्मी-श्चारुमीरुकरिभाजितचित्तः । मुक्तशुभ्रनतलालसहारो, ध्वस्तभूरितरलालसकृत्यः ॥२॥
युक्तसत्यनहुमानवदान्यः, कल्पितद्रविणमानवदान्यः ।
देशनारचितसाधुविचारो, मुक्तताविजितसाधुविचारः ॥ ३ ॥
उक्तसंशयहरोरुकृतान्त—स्तान्तसेनकपलायकृतान्तः । पावनीकृतवरिष्ठकृतान्त—स्ता तथा गिरमवेत्य कृतान्तः ॥४॥
यच्छतु श्रियमनर्गलदानो, दानवस्त्रिदशपुण्यनिदान । दानवार्यकरिविभ्रमयानो, यानर्जितपदोतिदयानः ॥५॥
( स्वागतावृत्तानि )

इति पुष्पाञ्जलि । ततो जल गृहीत्वा—

अमृतविहितपोप शैशव यस्य पूर्वा—दमृतपथनिदेशाद् दुर्धरा कीर्तिरासीत् ।

अमृतरचितभिक्षा यस्य वृत्तिव्रतादो–रमृतममृतसंस्थस्यार्चनायास्तु तस्य ॥ १ ॥ ( मालिनी० )

इति जलपूजा । पुन शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा— (१६)

विश्वेशः क्षितिलसमानमानमानः, प्रोद्याति मरुदुपहारहारहारः ।
संत्यक्तप्रवरवितानतानतानः, सामस्त्याद्विगतगानगानगानः ॥१॥

विस्फूर्जन्मथितविकासलासलासः, संक्षेपक्षपितविकारकारकारः ।
सेवार्थव्रजितविकालकालकाल–श्चारित्रक्षरितनिदानदानदानः ॥ २ ॥

पूजायां प्रभवदपुण्यपुण्यपुण्य–स्तीर्थार्थं विलसदगण्यगण्यगण्यः ।
सद्ध्यानैः स्फुरदवलोकलोकलोको, दीक्षायां हृतभावजालजालजालः ॥ ३ ॥

स्मृत्यैव क्षतकरवीरवीरवीरः, पादान्तप्रतिनतराजराजराजः ।
सद्विद्याजितशतपत्रपत्रपत्रः, पार्श्वस्थप्रवरविमानमानमानः ॥ ४ ॥

नेत्रश्रीजितजलवाहवाहवाहो, योगित्वामृतघनशीतशीतशीतः ।
वैराग्यादधृतसुवालवालवालो, नामार्थोत्थितमुदधीरधीरधीरः ॥ ५ ॥ ( प्रहर्षिणी० )

इति पुष्पाञ्जलिः । ततोऽक्षतान् गृहीत्वा—

क्षणनतताडनमर्दनलक्षण, किमपि कष्टमवाप्य तितिक्षितम् ।
त्रिभुवनस्तुतियोग्ययदक्षतै–स्तव तनुष्व जने फलितं हि तत् ॥ १ ॥

इति बिम्बेऽक्षतारोपणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० धूपेन धूपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा—(१७)

तार तारगमलनैः स्यादवतार, सार सारगेक्षणनार्यक्षतसारम् ।
काम काम घातितवन्तं कृतकामं, वामं वाम द्रुतमुज्झितगतवामम् ॥ १ ॥

देह देह त्यक्त्वा नम्रोरुविदेह, भाव भाव मुक्त्वा वेग द्रुतभावम् ।
नार नार शुद्धभवन्तं भुवनार, मार मार विश्वजय त सुकुमारम् ॥ २ ॥

देव देव पादतलालग्नरदेव, नाथ नाथ चान्तिकदीप्यच्छुरनाथम् ।
पाक पाक सयमयन्त कृतपाकं, वृद्ध वृद्ध कुड्मलयन्त सुरवृद्धम् ॥ ३ ॥

कार कार भाविरसानामुपकार, काम्य काम्य भाविरसानामतिकाम्यम् ।
जीवं जीव भाविरसानामुपजीव, वन्दे वन्दे भाविरसानामभिवन्दे ॥ ४ ॥

सर्वैः कार्यैः सङ्कुलरत्न कुलरत्न, शुद्धस्फूर्त्या भावविवितान विवितानम् ।
वन्दे जातत्राससमाधिं ससमाधिं, तीर्थाधीशं सङ्गतसङ्ग गतसङ्गम् ॥ ५ ॥ ( मत्तमयूर० )

इति पुष्पाञ्जलिक्षेपः । ततः—

स्वामिन् जायेताखिललोकोऽभयरक्षो, नामोच्चारात्तीर्थकराणामनघानाम् ।

यत्तद्विम्बे रक्षणकर्म व्यवसेयं, तत्र प्रायः श्लाघ्यतमः स्याद् व्यवहारः ॥ १ ॥

इति विम्बे ह्रां ह्रीं ह्रुँ ह्रौं ह्रः रूपैः पञ्चशून्यैः पञ्चांग ( ललाट—नयन—हृदय—सर्वांग—पीठ ) रक्षा गुरुभिः कार्या । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा— (१८)

बद्धनीतासुगं बद्धनीतासुगं, सानुकम्पाकरं सानुकम्पाकरम् ।

मुक्तसङ्गाश्रयं मुक्तसङ्गाश्रयं, प्रीतिनिर्यातनं प्रीतिनिर्यातनम् ॥ १ ॥

सर्वदा दक्षगं पारमार्थे रतं, सर्वदा दक्षणं पारमार्थे रतम् ।

निर्जराराधनं संवराभासनं, संवराभासनं निर्जराराधनम् ॥ २ ॥

तैजसं सङ्गतं सङ्गतं तैजसं, दैवतं बन्धुरं बन्धुरं दैवतम् ।

सत्तमं चागमाचागमात्सत्तमं साहसे कारणं कारणं साहसे ॥ ३ ॥

विश्वसाधारणं विश्वसाधारणं वीतसंवाहनं वीतसंवाहनम् ।

मुक्तिचंद्रार्जनं मुक्तिचंद्रार्जनं सारसंवाहनं सारसंवाहनम् ॥ ४ ॥

कामलाभासह पापरक्षाकर, पापरक्षाकर कामलाभामहम् ।
नाणचिद्वर्धन पूरकार्याधर पूरकार्याधर नाणचिद्वर्धनम् ॥ ५ ॥ ( चन्द्रानन० )

अनेन पुष्पाञ्जलिः । तत—

ससारसंसारसुतारणाय, सन्तानसन्तानकतारणाय,
देवाय देवायतितारणाय, नामोऽस्तु नामोस्तुतितारणाय ॥ १ ॥

इति विम्बस्य निरुछनकरणम् । पुन शक्रस्तनः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पा— (१९)

सदातनु दयाकरं दयाकर सदातनुम् । विभावरं विसङ्गर विसङ्गर विभावरम् ॥ १ ॥
निरञ्जन निरञ्जन कुपोपणं कुपोषगम् । सुराजित सुराजित धराधर धराधरम् ॥ २ ॥
जन विहाय रञ्जन कुल वितन्य सङ्कुलम् । भव विजित्य सद्भव जय प्रतोष्य वै जयम् ॥ ३ ॥
घन शिव शिवं घन चिरंतन तन चिरम् । कलाभृत भृत कला भुनः सम सम भुनः ॥ ४ ॥
नमामि त जिनेश्वर सदाविहारिशासनम् । सुराधिनाथमानसे सदाविहारिशासनम् ॥ ५ ॥ (प्रमाणिका०)

इति पुष्पाञ्जलिः ततो माल्यं गृहीत्वा—

प्रकटमानवमाननमडल, प्रगुणमानवमानवसङ्कुलम् । नमणिमानवमाननरं चिर, जयति मानवमाननकौसुमम् ॥१॥

प्रथमदिने
मध्याह्ने
करणीय

इति बिम्बे माल्यारोपणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन भूपः । पुनः पुष्पां०— (२०)

वहुशोकहरं बहुशोकहरं कलिकालमुदं कलिकालमुदम् ।

हरिविक्रमणं हरिविक्रमणं स कलाभिमतं सकलाभिमतम् ॥ १ ॥

कमलाक्षमलं विनयायतनं विनयायतनं कमलाक्षमलम् । परमातिशयं वसुसंवलभं वसुसंवलभं परमातिशयम् ॥ २ ॥

अतिपाटवपाटवलं जयिनं हतदानवदानवसुं सगुणम् । उपचारजवारजनाश्रयणं प्रतिमानवमानवरिष्टरुचम् ॥ ३ ॥

सरमं कृतमुक्तिविलासरमं भयदं भयमुक्तमिलाभयदम् । परमं व्रजनेत्रमिदं परमं भगवन्तमये प्रभुताभगवम् ॥ ४ ॥

भवभीतनरप्रमदाशरणं शरणं कुशलस्य मुनीशरणम् ।

शरणं प्रणमामि जिनं सदये सदये हृदि दीप्तमहागमकम् ॥ ५ ॥ ( जगति० )

इति पुष्पाञ्जलिः । ततः—

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता ।

क्षमस्व तं नाथ कुरु प्रसादं, प्रायो नराः स्युः प्रचुरप्रमादाः ॥ १ ॥

इति जिनविम्बस्यांजलिना बद्धेनापराधक्षामणम् । पुनः शक्र० ऊर्ध्वा० धूपः ॥ पुनः पुष्पां०— (२१)

करकलितपालनीयः कमनीयगुणैकनिधिमहाकरणः । करकलितपालनीयः स जयति जिनपतिरकर्मकृतकरणः ॥१॥

विनयनयगुणनिधान सदारतावर्जन विसमवायम् । वन्दे जिनेश्वरमह सदारतावर्जनं विममवायम् ॥ २ ॥
जलतापवारणमह नमामि सुखदं विशालवासचयम् । जलतापवारणमह नमामि सुखद विशालवासचयम् ॥ ३ ॥
शृगारसमर्याद यादःपतिवत् सदाप्यगाध च । शृगारसमर्याद यादःपतिवन्दितं प्रतिप्रणामि ॥ ४ ॥
भीमभवार्णवपोत वन्दे परमेश्वर सितश्लोकम् । उज्झितकलत्रपोतं वन्दे परमेश्वरं सितश्लोकम् ॥ ५ ॥

( गीतयः )

इति पुष्पाञ्जलिः । ततो दीप गृहीत्वा—

नीरस्य तर्पहरण ज्वलनस्य ताप तार्क्ष्यस्य गारुडमनगतनोर्विभूषणम् ।
कुर्मो जिनेश्वर जगत्त्रयदीपरूप दीपोपदा तव पुरो व्यवहारहेतोः ॥ १ ॥

इति दीपपूजा । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः ॥ पुनः पुष्पा०— ( २२ )

वनवास वनवास गुणहारिणहारिवपुप वपुपम् ।
विजयान विजयानं प्रभु प्रभु नमत नमत बलिन बलिनम् ॥ १ ॥
सोमकुल सोमकुल पङ्के हित पङ्के हित पुण्ये पुण्ये ।
बहिर्मुख बहिर्मुखमहित महित पर पर धीर धीरम् ॥ २ ॥

स्मृतिदायी स्मृतिदायी जिनो जिनोपास्तिकायः कायः ।
नखरायुध न खरायुध वन्द्यो वन्द्यो यक्रद्यक्रत्कान्तः कान्तः ॥ ३ ॥
शङ्काहृत् शङ्काहृत् कुलाकुलाहारः हारः करणः करणः ।
विश्वगुरुर्विश्वगुरुः कविराट् कविराट् महामहाकामः कामः ॥ ४ ॥
कल्याणं कल्याणं प्रथयन् प्रथयन् हिते हिते प्रख्यः प्रख्यः ।
परमेष्ठी परमेष्ठी लाभो लाभो वितर वितर सत्त्वं सत्त्वम् ॥ ५ ॥ ( स्वंधाजातिः )

इति पुष्पाञ्जलिः । ततो दर्पणं गृहीत्वा—

धीराधीरावगाहः कलिलकलिलताछेदकारीदकारी, प्राणि प्राणिवियोगः सरुचिसरुचिता भासमानः समानः ।
कल्पाकल्पात्मदर्शः परमपरमताछेददक्षोददक्षो, देवादेवात्महृद्यः स जयति जयतिर्यत्प्रकृष्टः प्रकृष्टः ॥ १ ॥
इति बिम्बे दर्पणढौकनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० धूपः । पुनः पुष्पां०— (२३)
अनारतमनारतं सगुणसङ्कुलं सङ्कुलं, त्रिशालकविशालकं स्मरगजेसमंजे समम् ।
सुधाकरं सुधाकरं निजगिराजितं राजितं, जिनेश्वरं जिनेश्वरं प्रणिपतामि तं तापितम् ॥ १ ॥
जरामरणबाधनं विलयसाधुतासाधनं, नमामि परमेश्वरं स्तुतिनिपक्तवागीश्वरम् ।
जरामरणबाधनं विलयसाधुतासाधनं, कुरङ्गनयनालटत् कटुकटाक्षतीव्रव्रतम् ॥ २ ॥

अनन्यशुभदेशनावशगतोऽन्देनासुर, पुराणपुरुषार्दनप्रचलदक्षभगिश्रियम् ।
अशेषमुनिमडलीप्रणतिरंजिताखडल, पुराणपुरुषार्दनप्रचलदक्षभगिश्रियम् ॥ ३ ॥

स्मरामि तव शासन सुकृतसत्त्वसरक्षगं, महाकुमतवारण सुकृतसत्त्वसरक्षगम् ।
परिस्फुरदुपासकं मृदुतया महाचेतनं, वीतीर्णजननिर्वृति मृदुतया महाचेतनम् ॥ ४ ॥

पयोधरविहारण जिनवर श्रिया कारण, पयोधरविहारण सरलदेहिना तारणम् ।
अनंगरूपरासनं नमत मशु तीर्थेश्वर, अनगकपरासन विधृतयोगनित्यस्मृतम् ॥ ५ ॥ ( पृथ्वी० )

अनेन पुष्पाजलिः । तत.—

त्वय्यज्ञाते स्तुतिपदमहो किं त्वयि ज्ञातरूपे, स्तुत्युत्कण्ठा न तदुभयथा त्वत्स्तुतिर्नाथ योग्या ।
तस्मात्सिद्ध्युद्व्रजनविधिना किंचिदाख्यातिभाजो, लोका भक्तिप्रगुणहृदया नापराधास्पद स्युः ॥ १ ॥

इति वृत्त पठित्वा अधिकृतजिनस्तोत्र पठेत् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पा-
जलिं गृहीत्वा— (२४)

कुलालता च पर्याप्त निर्माणे शुभकर्मणाम् । कुलालता च पर्याप्त वन्दे तीर्थपतिं सदा ॥ १ ॥
जयताज्जगतामीशः कल्पनत्तापमानदः । निरस्तममतामाय' कल्पनत्तापमानदः ॥ २ ॥

महामोहमहाशैल पविज्ञानपरायण। परायणपविज्ञान जय पारगतेश्वर ॥ ३ ॥
समाहितपरिवार परिवारसमाहित। नमोऽस्तु ते भवच्छ्रेयो भवच्छ्रेयो नमोऽस्तु ते ॥ ४ ॥
वराभिख्य वराभिख्य कृपाकर कृपाकर। निराधार निराधार जयानत जयानत ॥ ५ ॥ (श्लोकाः)

अनेन पुष्पांजलिः। ततः—

न स्वर्गाप्सरसां स्पृहा समुदयो नो नारकोच्छेदने, नो संसारपरिक्षितौ न च पुनर्निर्वाणनित्यस्थितौ।
त्वत्पादद्वितयं नमामि भगवन् किन्त्वेककं प्रार्थये, त्वद्भक्तिर्मम मानसे भवभवे भूयाद्विभो निश्चला ॥ १ ॥

इत्यञ्जलिं कृत्वा बिम्बाग्रे विज्ञप्तिकां कुर्यात्। (शान्तिनाथ-भगवतः स्तवनं ब्रूयात्)

पुनः शक्रस्तवः। ऊर्ध्वाधो० वृत्तेन धूपश्च। पुनः पुष्पां० (२५)

अधिकविरसः शृङ्गाराङ्गः समाप्तपरिग्रहो, जयति जगतां श्रेयस्कारी तवागमविग्रहः।
अधिकविरसः शृङ्गाराङ्गः समाप्तपरिग्रहो, न खलु कुमतव्यूहे यत्र प्रवर्तितविग्रहः ॥ १ ॥
विषयविषमं हन्तु मंक्षु प्रगाढभवभ्रमं, बहुलबलिनो देवाधीशा नितान्तमुपासते।
तव वृषवनं यस्मिन् कुंजान् महत्तमयोगिनो, बहुलबलिनो देवाधीशा नितान्तमुपासते ॥ २ ॥
समवसरणं साधुव्याघ्रैर्वृषैरहिभिर्वरं, जयति मधुमित्क्लृप्तानेकाविनश्वरनाटकम्।
तव जिनपते कांक्षापूर्तिं प्रयच्छतु संकुलं, समवसरणं साधुव्याघ्रैर्वृषैरहिभिर्वरम् ॥ ३ ॥

तव चिदुदयो विश्वस्वामिन्नियर्ति विशकितो, जलधरपद स्वर्गव्यूह भुजंगगृह परम् ।
जलधरपद स्वर्गव्यूहं भुजङ्गगृह पर, त्यजति भवता कारुण्याट्याक्षिपक्ष्मकटाक्षितः ॥ ४ ॥
विशदविशदप्राज्यप्राज्यप्रवारणवारण, हरिणहरिणश्रीदश्रीदप्रबोधनबोधन ।
कमलकमलव्यापव्यापद्रीतिदरीतिदा, गहनगहनश्रेणीश्रेणी विभाति विभाति च ॥ ५ ॥ (हरिणी०)

अनेन पुष्पाञ्जलिः । ततः—

जय जय देव देवाधिनाथो लसत्सेवया प्रीणितस्वान्तकान्तप्रभ—
प्रतीचबहुलदाननिर्वापणे पावनामोदवृष्टे विनष्टाखिलाघव्रज ।
मरणभयहराधिकध्यानविस्फूर्जितज्ञानदृष्टिप्रकृष्टेक्षणाश्वसन,
त्रिभुवनपरिवेपनिःशेपविद्वज्जनश्लाघ्यकीर्तिस्थितिख्यातिताश प्रभो ॥ १ ॥

इति वृत्तेन बिम्बाग्रतोऽञ्जलिं बद्ध्वा क्षण ध्यानम् [ शान्तिनाथभगवतः "ॐ ह्रीँ श्रीँ शान्तिनाथाय नमः" मत्रः १०८ कृत्वः पठनीयः ] पुनः शक्रस्तवः । पुनः धूप गृहीत्वा—
ऊर्ध्वाधो० अनेन वृत्तेन धूपोत्क्षेपः इति पञ्चविंशतिकुसुमाञ्जलयः प्रक्षिप्यन्ते । तत आरात्रिक मगल-दीपश्च (पूर्वपृष्ठ—१२) । तत आज्ञाहीनं० आवाहनं० कीर्तिं श्रियो० आशातनाया० (पूर्वपृष्ठ—२६) । इत्यादि पूर्ववत् पठनीयम् ।

[एतान्येव कुसुमाञ्जलिकाव्यान्तर्गतविधिकाव्यपञ्चविंशतिरहितानि कुसुमाञ्जलिकाव्यानि पञ्चविंशत्युत्तरशत-संख्यानि । एतत्स्तुतिकुसुमाञ्जलिमहाकाव्यं विद्वद्भिर्भणनीयं परिशीलनीयं व्याख्येयं पठनीयं च ।] इति प्रथमदिनमध्याह्ने करणीयः विधिः । [ आचारदिनकर पृ० १८५ तः पृ० १९५ पर्यंत ]

ધૂપ અંગેનો શ્લોક :—

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्ष–
प्रौढिप्राप्तप्रकर्षक्षितिरुहरसजः क्षोणपापावगाहः ।
धूपोऽकूपारकल्पप्रभवमृतिजराकष्ट–विस्पष्टदुष्ट–
स्फूर्जत्संसारपाराधिगममतिधियां विश्वभर्तुः करोतु ॥ १ ॥

## —: २५ कुसुमाञ्जलिविधिमा जोईती वस्तुनी यादी :—

१ चन्दन अर्चन ( चन्दन पूजा )
२ कुकुम अर्चन. ( केसर पूजा )
३ यक्षकर्दम विलेपन ( यक्षकर्दमनी दश वस्तुओ केसर, सुखड, अगर, बरास, कस्तुरी, गोरोचन्दन, रताजली, काचो हीगलोक, मरचककोल, सोनानो वरक )
४ कर्पूर आरोपण ( कपुर चढाववु )
५ वासक्षेप ( वासक्षेप पूजा )
६ कस्तुरीलेप ( कस्तुरीनो लेप )
७ कालागरु लेप ( कालागरुनो लेप )
८ पुष्पालकार अवतरण ( पुष्प अने अलकार उतारवा )
९ स्नपनपीठक्षालन ( स्नात्रपीठने धोवी )
१० बिंबमार्जन ( जिनप्रतिमाने वस्त्रथी साफ करवी )
११ पुष्प-आरोपण ( फूल चढाववा )
१२ फल-ढौकन ( फल मूकवा )
१३ अगरुक्षेप ( अगरु नाखवो )
१४ सयुक्तधूप-उत्क्षेपण ( बधा धूप करवा )
१५ जलपूजा ( जलपूजा करवी )
१६ अक्षत आरोपण ( चोखा चढाववा )
१७ पंचागरक्षा ( पचागरक्षामां १ ललाट, २ नयन, ३ हृदय ४ सर्वांग ५ पीठ )
१८ निलुञ्छनकरण ( लुछणा करवा )
१९ मालारोपण ( माला चढाववी )
२० अपराधक्षामण ( अपराध खमाववा )
२१ दीपदान ( दीवो करवो )
२२ दर्पण ढौकन ( दर्पण धरवु )
२३ अधिकृतजिनस्तोत्र ( मुख्य जिननु स्तोत्र बोलवु )
२४ विज्ञप्तिका ( विनति करवी )
२५ क्षणध्यानम् ( क्षणवार ॐ ह्रीँ श्रीँ शान्तिनाथाय नम १०८ वार ध्यान धरवु )

—०—

# अथ सप्तपीठ-पूजनम् ॥

( द्वितीयदिने प्रातः पीठपूजनात् पूर्वं पृष्ठ २ तः पृष्ठ ८ " इति जिनपूजनम् " तत् पर्यंतं पूजनविधिं विधाय तत्पश्चात् अग्रे सप्तपीठ—पूजनविधिः करणीयः ) ततो जिनाग्रे स्वर्णरूप्यताम्रकांस्यमयानि वा सप्तपीठानि न्यसेत् । तत्र—

प्रथमपीठे— पञ्चपरमेष्ठिस्थापनमक्षरैस्तिलकैर्वा मालाक्रमेण कार्यम् ॥

द्वितीयपीठे— दिक्क्रमेण दिक्पालस्थापनं तथैव ॥

तृतीयपीठे— चतुर्दिक्षु त्रयं त्रयं कृत्वा द्वादशराशिस्थापनम् ॥

चतुर्थपीठे— चतुर्दिक्षु सप्तकं सप्तकं कृत्वाऽष्टाविंशतिनक्षत्रस्थापनम् ॥

पञ्चमपीठे— दिक्क्रमेण क्षेत्रपालवर्जितं ग्रहस्थापनं विधेयम् ॥

षष्ठपीठे— चतुर्दिक्षु चतुष्कं चतुष्कं कृत्वा षोडशविद्यादेवीस्थापनम् ॥

सप्तमपीठे— गणपति—कार्तिकेय—क्षेत्रपाल—पुरदेवता—चतुर्णिकायदेवस्थापनम् ॥

ततः पूर्ववत् परमेष्ठिपूजनम् ॥ तथाहि प्रथमं पुष्पाञ्जलिं गृहीत्वा—

अर्हन्त ईशाः सकलाश्च सिद्धा आचार्यवर्या अपि पाठकेन्द्राः ।
मुनीश्वराः सर्वसमीहितानि कुर्वन्तु रत्नत्रययुक्तिभाजः ॥ १ ॥

इत्यर्हदादिपु पुष्पाञ्जलिक्षेपः ॥ ततोऽर्घ्यपाद्यादि प्रगुणीकृत्यार्हतः प्रति-

विश्वाग्रस्थितिशालिनः समुदयाः सयुक्तसन्मानसा,- नानारूपविचित्रचित्ररचिताः सत्रासितातद्विंपः ।
सर्वार्घप्रतिभासनैककुशलाः सर्वैर्नताः सर्वदाः, श्रीमत्तीर्थकरा भवन्तु भविना व्यामोहनिच्छित्तये ॥ १ ॥

ॐ नमो भगवद्भ्योऽर्हद्भ्यः सुरासुरनरपूजितेभ्यस्त्रिलोकनायकेभ्योऽष्टकर्मनिर्मुक्तेभ्योऽष्टादशदोपरहितेभ्यः चतुस्त्रिंशदतिशययुक्तेभ्यः पञ्चत्रिंशद्वचनगुणमहितेभ्यो भगवन्तोऽर्हन्तः सर्वविदः सर्वगा इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु स्वाहा, इदमर्घ्यं पाद्य बलिं चरु गृह्णन्तु गृह्णन्तु सन्निहिता भवन्तु भवन्तु स्वाहा, जल गृह्णन्तु २ स्वाहा, गन्ध गृ० पुष्प गृ० अक्षतान् गृ० फलानि गृ० मुद्रा गृ० धूप गृ० दीप गृ० नैवेद्य गृ० सर्वोपचारान् गृ० शान्ति कुर्वन्तु २, तुष्टिं कु० पुष्टिं कु० ऋद्धिं कु० वृद्धिं कु० सर्वसमीहितं कुर्वन्तु कुर्वन्तु स्वाहा ॥ स्वाहा सर्वत्र योज्यम् ॥

इत्येतैर्मन्त्रैराह्वान सन्निहितकरण जल-गन्ध-पुष्पाक्षत-फल-धूप-दीप-नैवेद्यदानम्, अर्घ्यपाद्यदान च ॥ इत्यर्हत्पूजाक्रमः ॥ ततः सिद्धान् प्रति-

यद्दीर्घकालसुनिकाचितवंधनद्ध-मष्टात्मक विपमचारमभेद्यकर्म ।
तत्संनिहत्य परम पदमापि यैस्ते, सिद्धा दिशन्तु महतीमिह कार्यसिद्धम् ॥ १ ॥

ॐ नमः सिद्धेभ्योऽशरीरेभ्यो व्यपगतकर्मबन्धनेभ्यश्चिदानन्दमयेभ्योऽनन्तवीर्येभ्यो भगवन्तः सिद्धा इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु० शेषं पूर्ववत् ॥ इति सिद्धपूजाक्रमः ॥ तत आचार्यान् प्रति—

विश्वस्मिन्नपि विष्टपे दिनकरीभूतं महातेजसा, यैरर्हद्भिरितेषु तेषु नियतं मोहान्धकारं जगत् ।
जातं तत्र च दीपतामविकलां प्रापुः प्रकाशोद्गमादाचार्याः प्रथयन्तु ते तनुभृतामात्मप्रबोधोदयम् ॥ १ ॥

ॐ नम आचार्येभ्यो विश्वप्रकाशकेभ्यो द्वादशांगगणिपिटकधारिभ्यः पञ्चाचाररतेभ्यो भगवन्त आचार्या इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु० शेषं पूर्ववत् ॥ इत्याचार्यपूजा ॥ तत उपाध्यायान् प्रति—

पापाणतुभ्योऽपि नरो यदीय—प्रसादलेशाल्लभते सपर्याम् ।
जगद्धितः पाठकसंचयः स कल्याणमालां वितनोत्वभीक्ष्णम् ॥ १ ॥

ॐ नम उपाध्यायेभ्यो निरंतरद्वादशांगपठनपाठनरतेभ्यः सर्वजन्तुहितेभ्यो भगवन्त उपाध्याया इह शान्तिकपूजामहोत्सवे आगच्छन्तु० शेषं पूर्ववत् ॥ इत्युपाध्यायपदपूजा ॥ ततः साधून् प्रति—

संसारनीरधिमवेत्य दुरन्तमेव यैः संयमारव्यवहनं प्रतिपन्नमाशु ।
ते साधकाः शिवपदस्य जिनाभिषेके साधुव्रजा विरचयन्तु महाप्रबोधम् ॥ १ ॥

ॐ नमः सर्वसाधुभ्यो मोक्षमार्गसाधकेभ्यः शान्तेभ्योऽष्टादशसहस्रशीलांगधारिभ्यः पञ्चमहाव्रतनिष्ठितेभ्यः

द्वितीयदिने
प्रातः
करणीयः
॥ ५८ ॥

परमहितेभ्यो भगवन्तः साधवः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु० शेषं पूर्ववत् इति साधुपूजा ॥

अथ पञ्चपरमेष्ठिना परिपिण्डितपूजा—

ॐ नमः सर्वतीर्थकरेभ्यः सर्वगतेभ्यः सर्वदर्शिभ्यः सर्वहितेभ्यः सर्वदेभ्यः ॐ नमो भगवद्भ्यः सिद्धेभ्यो भगवद्भ्य आचार्येभ्यो भगवद्भ्य उपाध्यायेभ्यो भगवद्भ्यः साधुभ्यो भगवन्तः पञ्चपरमेष्ठिनः इह शान्तिकपूजा-महोत्सवे सातिशयाः सप्रातिहार्याः सवचनगुणाः सज्ञानाः ससघाः सदेवासुरनराः प्रसीदन्तु इदमर्घ्यं पाद्यं गृह्णन्तु २, गन्धं गृ० २, पुष्पं गृ० २, धूपं गृ० २, दीपं गृ० २, अक्षतान् गृ० २, नैवेद्यं गृ० २, सर्वोपचारान् गृ० २, शान्तिं कुर्वन्तु २, तुष्टिं कु० २, पुष्टिं कु० २, ऋद्धिं कु० २, वृद्धिं कु० २, सर्वसमीहितं कुर्वन्तु कुर्वन्तु स्वाहा ॥ अनेन पञ्चपरमेष्ठिना परिपिण्डितपूजा ॥ एवं पचपरमेष्ठिपूजनं विधाय पञ्चहस्तवस्त्राच्छादनम् ॥ इत्याद्य-पीठम् ॥ (आचार दि० पृ० १५९ तमे)।

---

अथ द्वितीयपीठे दशदिक्पालपूजनम् ॥ पुष्पाञ्जलिं गृहीत्वा वृत्तं पठेत्—

दिक्पालाः सकला अपि प्रतिदिशं स्व स्व नल वाहनं, शस्त्रं हस्तगतं विधाय भगवत्स्नात्रे जगद्दुर्लभे ।
आनन्दोल्बणमानसा बहुगुणं पूजोपचारोच्चयं, सन्ध्याय प्रगुणं भवन्तु पुरतो देवस्य लब्धासनाः ॥ १ ॥

अनेन वृत्तेन दिक्पालवलये पुष्पाञ्जलिक्षेप । तत इन्द्र प्रति—

सम्यक्त्वस्थिरचित्तचित्रितककुप्कोटीरकोटीपटत्, सङ्घस्योत्कटराजपट्टपटुतासौभाग्यभाग्याधिकः ।
दुर्लक्षप्रतिपक्षकक्षदहनज्वालावलीसंनिभो, भास्वद्भाल निभालयेन्द्र भगवत्स्नात्राभिषेकोत्सवम् ॥ १ ॥

ॐ वषट् नमः श्रीइन्द्राय तप्तकांचनवर्णाय पीताम्बराय ऐरावणवाहनाय वज्रहस्ताय द्वात्रिंशल्लक्षविमानाधिपतये अनन्तकोटिसुरसुरांगनासेवितचरणाय सप्तानीकेश्वराय पूर्वदिगधीशाय श्रीइन्द्र सायुध सवाहन सपरिच्छद इह शान्तिक-पूजामहोत्सवे आगच्छ आगच्छ, इदमर्घ्यं पाद्यं बलिं चरुं गृहाण गृहाण, सन्निहितो भव भव स्वाहा, जलं गृहाण गृहाण, गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृहाण गृहाण, शान्ति कुरु कुरु,तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० कुरु कुरु सर्वसमीहितानि देहि देहि स्वाहा । इतीन्द्रपूजाक्रमः। अग्निं प्रति—

नीलाभाच्छादलीलाललितविलुलितालंकृतालंभविष्णु—स्फूर्जद्रोचिष्णुरोचिर्निचयचतुरतावंचितोदंचिदेहः ।
नव्यांभोदप्रमोदप्रमुदितसमदाकर्णविद्वेषिधूम—ध्वान्तध्वंसिध्वजश्रीरधिकतरधियं हव्यवाहो धिनोतु ॥ २ ॥

ॐ रें नमः श्री अग्नये सर्वदेवमुखाय प्रभूततेजोमयाय आग्नेयदिगधीश्वराय कपिलवर्णाय छागवाहनाय नीलाम्बराय धनुर्बाणहस्ताय श्रीअग्ने सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ २ ॥ यमं प्रति—

दैत्यालीमुंडखंडीकरणसुडमरोदंडशुंडप्रचंड—दोर्दंडाडंबरेण प्रतिहरदनुगं भापयन् विघ्नजातम् ।
कालिन्दीनीलमीलत्सलिलविलुनितालंकृतोद्यल्लुलाय—न्यस्तांघ्रिर्धर्मराजो जिनवरभवने धर्मवृद्धिं ददातु ॥ ३ ॥

द्वितीयदिने
प्रातः
करणीयः

ॐ घ घ घ नमो यमाय धर्मराजाय दक्षिणदिगधीशाय समवर्त्तिने धर्माधर्मविचारकरणाय कृष्णवर्णाय चर्मावरणाय महिषवाहनाय दडहस्ताय श्रीयम सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ३ ॥

निर्ऋति प्रति—

प्रेतान्तप्रोतगडप्रातकडितलड्डमुंडितामुंडधारी, दुर्वारीभूतवीर्याध्यवसितलसितापायनिर्वातनार्थी ।
कार्श्यामर्शप्रदीप्यत्कुणपकृतवदोन ऋतेर्व्यासपार्श्व—स्तीर्थेशस्नात्रकाले रचयतु निर्ऋतिर्दुष्टसघातघातम् ॥ ४ ॥

ॐ ह् स् क् ल् ह्रीं नमः ह्री श्रीं निऋतये नैऋतदिगधीशाय धूम्रवर्णाय व्याघ्रचर्मावृताय मुद्गरहस्ताय प्रेतवाहनाय श्रीनिऋते सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ४ ॥ वरुण प्रति—

कल्लोलोल्वणलोललालितचलत्प्रालम्बमुक्तावली—लीलालंभिततारकाढ्यगगनः सानन्दसन्मानसः ।
स्फूर्जन्मागधसुस्थितादिविबुधैः ससेव्यपादद्वयो, बुद्धिं श्रीवरुणो ददातु विशदा नीतिप्रतानाद्भुतः ॥ ५ ॥

ॐ व नमः श्रीवरुणाय पश्चिमदिगधीशाय समुद्रवासाय मेघवर्णाय पीताम्बराय पाशहस्ताय मत्स्यवाहनाय श्रीवरुण सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ५ ॥ वायु प्रति—

ध्वस्तध्वान्तध्वजपटलटछम्पटाटकशकः, पंकव्रातश्लथनमथनः पार्श्वसस्थायिदेवः ।
अर्हत्सेवाविदलितसमस्ताघसंघो विदध्यात्, बाह्यान्तस्थप्रचुररजसा नाशन श्रीनभस्वान् ॥ ६ ॥

द्वितीयदिने प्रात करणीय

ॐ यं नमः श्रीवायवे वायव्यदिगधीशाय धूसराङ्गाय रक्ताम्बराय हरिणवाहनाय ध्वजप्रहरणाय श्रीवायो सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ६ ॥ धनदं प्रति—

दिननाथलक्षसमदीप्तिदीपिताखिलदिग्विभागमणिरम्यपाणियुग् ।
सदगण्यपुण्यजनसेवितक्रमो धनदो ददातु जिनपूजने धियम् ॥ ७ ॥

ॐ यं यं यं नमः श्रीधनदाय उत्तरदिगधीशाय सर्वयक्षेश्वराय कैलाससंस्थाय अलकापुरीप्रतिष्ठाय शक्रकोशाध्यक्षाय कनकांगाय श्वेतवस्त्राय नरवाहनाय रत्नहस्ताय श्रीधनद सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ७ ॥ ईशानं प्रति—

क्षुभ्यत्क्षीराब्धिगर्भाम्बुनिवहसततक्षालितांसोज्ज्वर्णः, स्वःसिद्ध्यद्धिप्रगल्भीकरणविरचितात्यन्तसंपातिनृत्यः ।
तार्तीयाक्षिप्रतिष्ठस्फुटदहनवनज्वालया लालिताङ्गः, शंभुः शं भासमानं रचयतु भविनां क्षीणमिथ्यात्वमोहः ॥ ८ ॥

ॐ नमः श्री—ईशानाय ईशानदिगधीशाय सुरासुरनरवन्दिताय सर्वभुवनप्रतिष्ठाय श्वेतवर्णाय गजाजिनावृताय वृषभवाहनाय पिनाकशूलधराय श्री—ईशान सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ८ ॥ ब्रह्माणं प्रति—

उद्यत्पुस्तकशस्तहस्तनिवहः सन्न्यस्तपापोद्भवः, शुद्धध्यानविधूतकर्मविकलो लालित्यलीलानिधिः ।
वेदाचारविसारिचारुवदनोन्मादः सदा सौम्यदृक्, ब्रह्मा ब्रह्मणि निश्चितं वितनुताद् भव्यं समस्तं जगत् ॥ ९ ॥

ॐ नमो ब्रह्मणे ऊर्ध्वलोकाधीश्वराय सर्वसुरप्रतिपन्नपितामहाय स्थविराय नाभिसभवाय काञ्चनवर्णाय चतुर्मुखाय श्वेतवस्त्राय हंसवाहनाय कमलसंस्थाय पुस्तककमलहस्ताय श्रीब्रह्मन् सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ९ ॥ नागान् प्रति—

मणिकिरणकदम्बाडम्बरालम्बितुङ्गो—त्तमकरणशरण्यागण्यनित्यार्हदाज्ञाः ।
बलिभुवनविभावैः स्वैरगन्धाः सुधान्ता, गुरुनरभुवि लात्वा यान्तु ते दन्दशूकाः ॥ १० ॥

ॐ ह्रीं फु नमः श्रीनागेभ्यः पातालस्वामिभ्यः श्रीनागमण्डल सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ १० ॥

ॐ नमः सर्वेभ्यो दिक्पालेभ्यः शुद्धसम्यग्दृष्टिभ्यः सर्वजनपूजितेभ्यः सर्वेऽपि दिक्पालाः सायुधाःसवाहनाः सपरिच्छदाः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदमर्घ्यं पाद्य बलिं चरु गृह्णन्तु गृह्णन्तु स्वाहा, सन्निहिता भवन्तु भवन्तु स्वाहा, जल गृह्णन्तु गृह्णन्तु, गन्ध० पुष्प० अक्षतान्० फलानि० मुद्रा० धूप० दीपं० नैवेद्य० सर्वोपचारान् गृह्णन्तु गृह्णन्तु, शान्ति कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं०ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा । इति सर्वदिक्पालपरिपिण्डितपूजाक्रमः । एव दिक्पालाना पूजा विधाय पीठे दशहस्तवस्त्रेणाच्छादनं विधेयम् ।।इति द्वितीयपीठपूजनम् ॥ (आ० दि० पृ० २७८)

द्वितीयदिने
प्रात
करणीय

अथ तृतीयपीठे द्वादशराशिपूजनम् । पुष्पाञ्जलिं गृहीत्वा—

मेषवृषमिथुनकर्कट—सिंहकनीवाणिजालिनापधराः । मकरघटमीनसंज्ञाः संनिहिता राशयः सन्तु ॥ १ ॥

इति राशिपीठोपरि पुष्पाञ्जलिक्षेपः ॥ ततो मेषं प्रति—

मंगलस्य निवासाय सूर्योच्चत्वकराय च । मेषाय पूर्वसंस्थाय नमः प्रथमराशये ॥ १ ॥

ॐ नमो मेषाय मेष इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ इदमर्घ्यं पाद्यं बलिं चरुम् आचमनीयं गृहाण २, सन्निहितो भव २ स्वाहा, जलं गृहाण २, गन्धं० अक्षतान्० फलानि० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुरु २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितं यच्छ २ स्वाहा ॥ अनेन मन्त्रेण सर्वोपचारैः मेषपूजनम् ॥ १ ॥ वृषं प्रति—

चन्द्रोच्चकरणे याम्य—दिशि स्थायी कवेर्गृहम् । वृषः सर्वाणि पापानि शान्तिकेऽत्र निकृन्ततु ॥ २ ॥

ॐ नमो वृषाय वृष इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ २ ॥ मिथुनं प्रति—

शशिनन्दनगेहाय राहूच्चत्वकराय च । पश्चिमाशाश्रितायास्तु मिथुनाय नमः सदा ॥ ३ ॥

ॐ नमो मिथुनाय मिथुन इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ३ ॥ कर्कं प्रति—

वाक्पतेरुच्चत्वकरणं शरणं तारकेशितुः । कर्कटं धनदाशास्थं प्रणमामो निरन्तरम् ॥ ४ ॥

ॐ नमः कर्काय कर्क इह शान्तिकपूजामहोत्सवे० शेष पूर्ववत् ॥ ४ ॥ सिंह प्रति–
पद्मिनीपतिसनास पूर्वाशाकृतसश्रय । सिंहः समस्तदुःखानि विनाशयतु धीमताम् ॥ ५ ॥
ॐ नमो सिंहाय सिंह इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ६ ॥ कन्या प्रति–
बुधस्य सदन रम्य तस्यैवोच्चत्वकारिणी । कन्या कृतान्तदिग्वासा समानन्द प्रयच्छतु ॥ ६ ॥
ॐ नमः कन्यायै कन्ये इह शान्तिकपूजामहोत्सवे० शेष पूर्ववत् ॥ ६ ॥ तुला प्रति–
यो दैत्याना महाचार्य–स्तस्यावासरसमागतः । शनेरुच्चत्वदाताऽस्तु पश्चिमास्थतुलाधरः ॥ ७ ॥
ॐ नमस्तुलाधराय तुलाधर इह शान्तिकपूजामहोत्सवे० शेप पूर्ववत् ॥ ७ ॥ वृश्चिक प्रति–
भौमस्य तु खलु क्षेत्र धनदाशाविभासकः । वृश्चिको दुःखसघात शान्तिकेऽत्र निहन्तु नः ॥ ८ ॥
ॐ नमो वृश्चिकाय वृश्चिक इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ८ ॥ धन्विनं प्रति–
सर्वदेवगणार्च्यस्य सदन पददायिनः । सुरेन्द्राशास्थितो धन्वी धनवृद्धि करोतु नः ॥ ९ ॥
ॐ नमो धन्विने धन्विन् इह शान्तिकपूजामहोत्सवे० शेप पूर्ववत् ॥ ९ ॥ मकर प्रति–
निवासः सूर्यपुत्रस्य भूमिपुत्रोच्चताकरः । मकरो दक्षिणासंस्थः सस्यामीति विहन्तु नः ॥ १० ॥

ॐ नमो मकराय मकर इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ १० ॥ कुंभं प्रति—

ग्रहेशतनयस्थानं पश्चिमानन्ददायकः । कुंभः करोतु निर्दंभं पुण्यारम्भं मनीषिणाम् ॥ ११ ॥

ॐ नमः कुंभाय कुंभ इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ११ ॥ मीनं प्रति—

कवेरुच्चत्वदातारं क्षेत्रं सुरगुरोरपि । वन्दामहे नृधर्मांशा—पावनं मीनमुत्तमम् ॥ १२ ॥

ॐ नमो मीनाय मीन इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ १२ ॥ एभिर्मंत्रैः प्रत्येकपूजा ॥

ततोऽनन्तरम्—

ॐ मेष—वृष—मिथुन—कर्क—सिंह—कन्या—तुला—वृश्चिक—धनु—मकर—कुंभ—मीनाः सर्वे राशयः स्वस्वस्वाम्यधिष्ठिता इह शान्तिकपूजामहोत्सवे आगच्छन्तु २, इदमर्घ्यं पाद्यं वलिं चरुम् आचमनीयं गृह्णन्तु २, सन्निहिता भवन्तु २ स्वाहा, जलं गृह्णन्तु २, गन्धं० अक्षतान्० फलानि० मुद्रां० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० गृ० २, शान्तिं कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ अनेन सर्वराशीनां परिपिण्डितपूजा ॥ ततः पीठस्य द्वादशहस्तवस्त्राच्छादनम् ॥ इति तृतीयपीठपूजनम् ॥ (आचा० दि० पृ० २२० )

अथ चतुर्थपीठे नक्षत्रपूजनम् । प्रथमं पुष्पांजलिं गृहीत्वा—

नासत्यप्रमुखा देवा अधिष्ठितनिजोडवः । अत्रैत्य शान्तिके सन्तु सदा सन्निहिताः सताम् ॥ १ ॥

इति नक्षत्रपीठे पुष्पाञ्जलिक्षेपः ॥ ततोऽश्विनीं प्रति—

द्वितीयदिने
प्रातः
करणीयः

ॐ ज्वीं नमो नासत्याभ्यां स्वाहा ॥ इति मूलमन्त्रः ॥ ॐ नमो नासत्याभ्याम् अश्विनिस्वामिभ्या नासत्यौ इह शान्तिकपूजामहोत्सवे आगच्छतम् २, इदमर्घ्यं पाद्य बलिं चरुम् आचमनीयं गृह्णीतं २ सन्निहितौ भवत २ स्वाहा, जल गृह्णीत २, गन्ध० अक्षतान्० फलानि० मुद्रा० पुष्प० धूपं० दीप० नैवेद्यं० सर्वोपचारान् गृह्णीत २, शान्ति कुरुत २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि ददतं २ स्वाहा ॥ द्विवचनम् ॥ १ ॥ भरणीं प्रति—

ॐ यं य नमो यमाय स्वाहा ॥ इति मूल० ॥ ॐ नमो यमाय भरणीस्वामिने यम इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ इदमर्घ्यं पाद्य बलिं चरुम् आचमनीय गृहाण २ सन्निहितो भव २ स्वाहा, जल गृहाण २, गन्ध० अक्षतान्० फलानि० मुद्रा० पुष्प० धूप० दीप० नैवेद्य० सर्वोपचारान् गृहाण २, शान्ति कुरु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि २ स्वाहा ॥ एकवचनम् ॥ २ ॥ कृत्तिका प्रति—

ॐ रं र नमो अग्नये स्वाहा ॥ ॐ नमोऽग्नये कृत्तिकास्वामिने अग्ने इह० शेष पूर्ववत् ॥ एकवचनम् ॥ ३ ॥ रोहिणीं प्रति—

ॐ ब्रह्मब्रह्मणे नमः स्वाहा ॥ ॐ नमो ब्रह्मणे रोहिणीश्वराय ब्रह्मन् इह० शेषं पूर्ववत् ॥ ४ ॥ एकवचनम् ॥ ४ ॥ मृगशिरः प्रति—

ॐ चं चं चं नमश्चन्द्राय स्वाहा ॥ ॐ नमश्चन्द्राय मृगशिरोऽधीशाय चन्द्र इह० शेषं पूर्ववत् ॥ एकवचनम् ॥ ५ ॥ आर्द्रां प्रति—

ॐ द्रु द्रु नमो रुद्राय स्वाह ॥ ॐ नमो रुद्राय आर्द्रेश्वराय रुद्र इह० शेषं पूर्ववत् एकव० ॥ ६ ॥ पुनर्वसुं प्रति—

ॐ जानि जानि नमो अदितये स्वाहा ॥ ॐ नमो अदितये पुनर्वसुस्वामिन्यै अदिते इह० शेषं पूर्ववत् ॥ एकव० स्त्रीलिंगे सन्निहिता भव २ इति ॥ ७ ॥ पुष्यं प्रति—

ॐ जीव जीव नमो बृहस्पतये स्वाहा ॥ ॐ नमो बृहस्पतये पुष्याधीशाय बृहस्पते इह० शेषं पूर्ववत् ॥ एकव० ॥ ८ ॥ आश्लेषां प्रति—

ॐ फुं फुं नमः फणिभ्यः स्वाहा ॥ ॐ नमः फणिभ्यः आश्लेषास्वामिभ्यः फणिन इह शान्तिकपूजामहोत्सवे आगच्छत २, इदमर्घ्यं पाद्यं बलिं चरुं गृह्णीत २, सन्निहिता भवत २ स्वाहा, जलं गृह्णीत २ गन्धं० अक्षतान्० फलानि० मुद्रां० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुरुत २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि ददत २ स्वाहा ॥ बहुवचनपाठः ॥ ९ ॥ मघां प्रति—

ॐ स्वधा नमः पितृभ्यः स्वाहा ॥ ॐ नमः पितृभ्यो मघेशेभ्यः पितर इह० शेपं पूर्ववत् ॥ नहुनचनपाठः ॥ १० ॥ पूर्वाफाल्गुनीं प्रति—

ॐ ए नमो योनये स्वाहा ॥ ॐ नमो योनये पूर्वाफाल्गुनीस्वामिन्यै योनये इह० शेप पूर्ववत् ॥ एकवचन ॥ स्त्रीलिंगे सन्निहिता भव २ इति ॥ ११ ॥ उत्तराफाल्गुनीं प्रति—

ॐ घृणि २ नमोऽर्यम्णे उत्तराफाल्गुनीस्वामिने स्वाहा ॥ ॐ अर्यमन् इह० शेप पूर्ववत् ॥ एकवचनम् ॥ १२ ॥ हस्त प्रति—

ॐ घृणि २ नमो दिनकराय स्वाहा ॥ ॐ नमो दिनकराय हस्तस्वामिने दिनकर इह० शेपं पूर्ववत् ॥ एकव० ॥ १३ ॥ चित्रा प्रति—

ॐ तक्ष २ नमो विश्वकर्मणे स्वाहा ॥ ॐ नमो विश्वकर्मणे चित्रेशाय विश्वकर्मन् इह० शेप पूर्ववत् ॥ एकव० ॥ १४ ॥ स्वातिं प्रति—

ॐ यः यः नमो वायवे स्वाहा ॥ ॐ नमो वायवे स्वातीशाय वायो इह० शेपं पूर्ववत् ॥ एकव० १५ ॥ विशाखा प्रति—

ॐ घृणि घृणि नमः पूष्णे स्वाहा ॥ ॐ नमो पूष्णे रेवतीशाय पूषन् इह० शेषं पूर्ववत् ॥ एकव० ॥ २८ ॥ एतेषां प्रत्येकं नक्षत्रपूजा ॥ ततः—

ॐ नमः सर्वनक्षत्रेभ्यः सर्वनक्षत्राणि सर्वनक्षत्रेशा इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदम० आचमनीयं गृह्णन्तु गृह्णन्तु सन्निहिता भवन्तु भवन्तु स्वाहा ॥ जलं गृह्णन्तु गन्धं० अक्षतान्० फलानि० मुद्रां० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितं ददतु ददतु स्वाहा ॥ इत्यनेन मंत्रेण परिपिंडितपूजा उपरि अष्टाविंशतिहस्तवस्त्राच्छादनम् ॥ इति चतुर्थपीठे नक्षत्रपूजा ॥ ( आ० दि० २२१ पृ० )

अथ पञ्चमपीठे नवग्रहपूजनम् ॥ प्रथमं पुष्पाञ्जलिं गृहीत्वा—

सर्वे ग्रहा दिनकरप्रमुखाः स्वकर्म—पूर्वोपनीतफलदानकरा जनानाम् ।
पूजोपचारनिकरं स्वकरेषु लात्वा, सन्त्वागताः सपदि तीर्थकरार्चनेऽत्र ॥ १ ॥

इति ग्रहपीठे पुष्पाञ्जलिक्षेपः । ततः सूर्यं प्रति—

विकसितकमलावलिविनिर्यत्परिमलललितपूतपादपृष्ठः ।
दशशतकिरणः करोतु नित्यं भुवनगुरोः परमर्चने शुभौघम् ॥ १ ॥

द्वितीयदिने
प्रातः
करणीयः

ॐ घृणि घृणि नमः श्रीसूर्याय सहस्रकिरणाय रत्नादेवीकान्ताय वेदगर्भाय यमयमुनाजनकाय जगत्कर्मसाक्षिणे पुण्यकर्मप्रभावकाय पूर्वदिगधीशाय स्फटिकोज्ज्वलाय रक्तवस्त्राय कमलहस्ताय सप्ताश्वरथवाहनाय श्रीसूर्य सवाहन सपरिच्छद इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ, इदमर्घ्यं पाद्यं बलिं चरुं गृहाण गृहाण, सन्निहितो भव भव स्वाहा, जलं गृहाण गृहाण, गन्धं० पुष्पं० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुरु कुरु, तुष्टिं कुरु कुरु, पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि देहि स्वाहा ॥ १ ॥
चन्द्र प्रति—

प्रोद्यत्पीयूषपूरप्रसृमरजगतीपोषनिर्दोषकृत्य, व्यावृत्तो ध्वान्तकान्ताकुलकलितमहामानदत्तापमानः ।
उन्माद्यत्कटकालीदलकलितसरोजालीनिद्राविनिद्र—श्चन्द्रश्चन्द्रावदात गुणनिवहमभिव्यातनोत्वात्मभाजाम् ॥ १ ॥

ॐ चं च च नमश्चन्द्राय शम्भुशेखराय षोडशकलापरिपूर्णाय तारगणाधीशाय वायव्यदिगधीशाय अमृतायामृतमयाय सर्वजगत्पोषणाय श्वेतवस्त्राय श्वेतदशवाजिवाहनाय सुधाकुंभहस्ताय श्रीचन्द्र सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ २ ॥ मंगल प्रति—

ऋणाभिहन्ता सुकृताधिगन्ता, सदैव वक्रः क्रतुभोजिमान्यः ।
प्रमाथकृद्विघ्नसमुच्चयानां, श्रीमंगलो मंगलमातनोतु ॥ ३ ॥

द्वितीयदिने
प्रातः
करणीय

ॐ ह्रूं ह्रूं हं सः नमः श्रीमङ्गलाय दक्षिणदिगधीशाय विद्रुमवर्णाय रक्ताम्बराय भूमिस्थिताय कुद्दालहस्ताय श्रीमङ्गल सायुध सवाहन सपरिच्छद इह० शेपं पूर्ववत् ॥ ३ ॥ बुधं प्रति–

प्रियंगुप्रख्यांगो गलदमलपीयूपनिकप–स्फुरद्वाणीत्राणीकृतसकलशास्त्रोपचयधीः ।
समस्तग्रासीनामनुपमविधानं शशिसुतं, प्रभूतारातीनामुपयनयतु भंगं स भगवान् ॥ ४ ॥

ॐ ऐं नमः श्रीबुधाय उत्तरदिगधीशाय हरितवस्त्राय कलहंसवाहनाय पुस्तकहस्ताय श्रीबुध सायुध सवाहन सपरिच्छद इह० शेपं पूर्ववत् ॥ ४ ॥ गुरुं प्रति–

शास्त्रप्रस्तारसारप्रततमतिविताना।भिमानातिमान–प्रागल्भ्यः शंभुजंभक्षयकरदिनकृद्विष्णुभिः पूज्यमानः ।
निःशेषास्वप्नजातिव्यतिकरपरमाधीतिहेतुर्बृहत्याः, कान्तः कान्तादिवृद्धिं भवभयहरणः सर्वसंघस्य कुर्यात् ॥५॥

ॐ जीव जीव नमः श्रीगुरवे बृहतीपतये ईशानदिगधीशाय सर्वदेवाचार्याय सर्वग्रहबलवत्तराय कांचनवर्णाय पीतवस्त्राय पुस्तकहस्ताय श्रीहंसवाहनाय श्रीगुरो सायुध सवाहन सपरिच्छद इह० शेपं पूर्ववत् ॥ ५ ॥ शुक्रं प्रति–

दयितसंवृतदानपराजित–प्रवरदेहि शरण्य हिरण्यद । दनूजपूज्य जयोशन सर्वदा, दयितसंवृतदानपराजित ॥६॥

ॐ सु नमः श्रीशुक्राय दैत्याचार्याय आग्नेयदिगधीशाय स्फटिकोज्ज्वलाय श्वेतवस्त्राय कुंभहस्ताय तुरगवाहनाय श्रीशुक्र सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ६ ॥ शनि प्रति—

मा भूद्विपत्समुदयः खलु देहभाजा, द्रागित्युदीरितलघिष्ठगतिर्नितान्तम् ॥
कादम्बिनीकलितकान्तिरनन्तलक्ष्मी, सूर्यात्मजो वितनुताद् विनयोपगूढम् ॥ ॥

ॐ शः नमः शनैश्चराय पश्चिमदिगधीशाय नीलदेहाय नीलाम्बराय परशुहस्ताय कमलवाहनाय श्रीशनैश्चर सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ७ ॥ राहु प्रति—

सिंहिकासुतसुधाकरसूर्योन्मादसादन विषादविघातिन् । उद्यत झटिति शत्रुसमूह श्राद्धेन भुवनानि नयस्व ॥८॥

ॐ क्षः नमः श्रीराहवे नैर्ऋतदिगधीशाय कज्जलश्यामलाय श्यामवस्त्राय परशुहस्ताय सिंहवाहनाय श्रीराहो सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ८ ॥ केतु प्रति—

सुखोत्पातहेतो विपद्वार्द्धिसेतो निपग्रासमेतोत्तरीयार्द्धकेतो ।
अभद्रानुपेतोपमावायुकेतो जयाशंसनाहर्निशं तार्क्ष्यकेतो ॥ ९ ॥

ॐ नमः श्रीकेतवे राहुप्रतिच्छन्दाय श्यामांगाय श्यामवस्त्राय पन्नगवाहनाय पन्नगहस्ताय श्रीकेतो सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ९ ॥

अथ ग्रहाणां परिपिंडितपूजा—

ॐ नमः श्रीआदित्यादिग्रहेभ्यः कालप्रकाशकेभ्यः शुभाशुभकर्मफलदेभ्यः सर्वे ग्रहाः सायुधाः सवाहनाः सपरिच्छदाः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु गृह्णन्तु स्वाहा, सन्निहिता भवन्तु भवन्तु स्वाहा, जलं गृह्णन्तु गृह्णन्तु, गन्धं॰ पुष्पं॰ अक्षतान्॰ फलानि॰ मुद्रां॰ धूपं॰ दीपं॰ नैवेद्यं॰ सर्वोपचारान् गृह्णन्तु गृह्णन्तु, शान्तिं कुर्वन्तु कुर्वन्तु, तुष्टिं॰ पुष्टिं॰ ऋद्धिं॰ वृद्धिं॰ सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ इति ग्रहाणां परिपिण्डितपूजा ॥ पूजां विधाय नवहस्तवस्त्रेणाच्छादनम् ॥ इति पञ्चम-पीठपूजनम् ( आ॰ दि॰ पृ॰ १८० )

अथ षष्ठपीठे षोडशविद्यादेवीपूजनम् ॥ प्रथमं पुष्पांजलिं करे गृहीत्वा—

यासां मन्त्रपदैर्विशिष्टमहिमप्रोद्भूतभूत्युत्करैः, षट् कर्माणि कुलाध्वसंश्रितधियः क्षेमात् क्षणात् कुर्वते ।
ता विद्याधरवृन्दवन्दितपदा विद्यावलीसाधने, विद्यादेव्य उरुप्रभावविभवं यच्छन्तु भक्तिस्पृशाम् ॥ १ ॥

इति पुष्पांजलिक्षेपः ॥ रोहिणीं प्रति—

शंखाक्षमालाशरचापशालि—चतुष्करा कुन्दतुषारगौरा । गोगामिनी गीतवरप्रभावा श्रीरोहिणी सिद्धिमिमां ददातु ॥१॥

ॐ ह्रीं नमः श्रीरोहिण्यै विद्यादेव्यै भगवति श्रीरोहिणि इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ

इदमर्घ्यं पाद्य बलिं चरुं गृहाण २, सन्निहिता भव २ स्वाहा, जल गृहाण २, गन्ध० पुष्पं० अक्षतान्० फलानि० मुद्रा० धूपं० दीप० नैवेद्य० सर्वोपचारान् गृहाण २, शान्ति कुरु २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि कुरु २ स्वाहा ॥ १ ॥ प्रज्ञप्ति प्रति–

शक्तिसरोरुहहस्ता मयूरकृतयान लीलया कलिता । प्रज्ञप्तिर्विज्ञप्ति शृणोतु नः कमलपत्राभा ॥ २ ॥

ॐ ह स क्लीं नम. श्रीप्रज्ञप्त्यै विद्यादेव्यै भगवति श्रीप्रज्ञप्ति इह० शेषं पूर्ववत् ॥ २ ॥ वज्रशृखला प्रति–

सशृखला गदाहस्ता कनकप्रभविग्रहा । पद्मासनस्था श्रीवज्र–शृखला हन्तु नः खलान् ॥ ३ ॥

ॐ नमः श्रीवज्रशृखलायै विद्यादेव्यै भगवति श्रीवज्रशृखले इह० शेष पूर्ववत् ॥ ३ ॥ वज्राकुशी प्रति–

निर्स्त्रिशवज्रफलकोत्तमकुन्तयुक्त–हस्ता सुतप्तविलसत्कलधौतकान्तिः ।
उन्मत्तदन्तिगमना भुवनस्य विघ्न वज्राकुशी हरतु वज्रसमानशक्तिः ॥ ४ ॥

ॐ ल ल लं नमः श्रीवज्राकुशायै विद्यादेव्यै भगवति श्रीवज्राकुशे इह० शेष पूर्ववत् ॥ ४ ॥ अप्रतिचक्रा प्रति–

गरुत्मत्पृष्ठ आसीना कार्त्तस्वरसमच्छविः । भूयादप्रतिचक्रा नः सिद्धये चक्रधारिणी ॥ ५ ॥

ॐ नमः श्रीअप्रतिचक्रायै विद्यादेव्यै भगवति अप्रतिचक्रे इह० शेषं पूर्ववत् ॥ ५ ॥ पुरुषदत्तां प्रति—

खड्गस्फुरांकितकरद्वयशासमाना, मेघाभसैरिभपट्टस्थितिभासमाना ।
जात्यार्जुनप्रभतनुः पुरुषाग्रदत्ता, भद्रं प्रयच्छतु सतां पुरुषाग्रदत्ता ॥ ६ ॥

ॐ हं सं नमः श्रीपुरुषदत्तायै विद्यादेव्यै भगवति श्रीपुरुषदत्ते इह० शेषं पूर्ववत् ॥ ६ ॥ कालीं प्रति—

शरदम्बुधरप्रमुक्तचंचद्गगनतलाभतनुद्युतिर्दयाढ्या ।
विकचकमलवाहना गदाभृत् कुशलमलंकुरुतात् सदैव काली ॥ ७ ॥

ॐ ह्रीँ नमः श्रीकालिकायै विद्यादेव्यै भगवति श्रीकालिके इह० शेषं पूर्ववत् ॥ ७ ॥ महाकालीं प्रति—

नरवाहना शशधरोपलोज्ज्वला रुचिराक्षसूत्रफलविस्फुरत्करा ।
शुभघंटिकापविवरेण्यधारिणी भुवि कालिका शुभकरा महापरा ॥ ८ ॥

ॐ ह्रूँ घं नमो महाकाल्यै विद्यादेव्यै भगवति श्रीमहाकालिके इह० शेषं पूर्ववत् ॥ ८ ॥ गौरीं प्रति—

गोधासनसमासीना कुन्दकर्पूरनिर्मला । सहस्रपत्रसंयुक्त—पाणिर्गौरी श्रियेऽस्तु नः ॥ ९ ॥

ॐ ए नमः श्रीगौर्यै विद्यादेव्यै भगवति श्रीगौरि इह० शेषं पूर्ववत् । ९ ॥ गान्धारीं प्रति—

द्वितीयदिने
प्रातः
करणीयः

शतपत्रस्थितचरणा मुसलं वज्रं च हस्तयोर्दधती ।
कमनीयाञ्जनकान्ति-र्गान्धारी गां शुभां दधात् ॥ १० ॥

ॐ गं गां नमः श्रीगान्धार्यै विद्यादेव्यै भगवति श्रीगान्धारि इह० शेष पूर्ववत् ॥ १० ॥
महाज्वालां प्रति–

मार्जारवाहना नित्य ज्वालोद्भासिकरद्वया । शशाकधवला ज्वाला-देवी भद्रं ददातु नः ॥ ११ ॥

ॐ क्लीं नमः श्रीमहाज्वालायै विद्यादेव्यै भगवति महाज्वाले इह० शेष पूर्ववत् ॥ ११ ॥ मानवीं प्रति–

नीलागी नीलसरोजवाहना वृक्षभासमानकरा । मानवगणस्य सर्वस्य मंगलं मानवी दद्यात् ॥ १२ ॥

ॐ च च नमः श्रीमानव्यै विद्यादेव्यै भगवति श्रीमानवि इह० शेष पूर्ववत् ॥ १२ ॥ वैरोट्या प्रति–

खड्गस्फुरत्स्फुरितवीर्यवदूर्ध्वहस्ता, सद्दन्दशूकवरदापरहस्तयुग्मा ।
सिंहासनाब्जमुदतारतुषारगौरा वैरोट्ययाप्यभिधयास्तु शिवाय देवी ॥ १३ ॥

ॐ ज ज नमः श्रीवैरोट्यायै विद्यादेव्यै भगवति श्रीवैरोट्ये इह० शेष पूर्ववत् ॥ १३ ॥ अच्छुप्ता प्रति–

सव्यपाणिधृतकार्मुकस्फरान्यस्फुरद्विशिखखड्गधारिणी ।
विद्युदाभतनुरश्ववाहनाऽच्छुप्तिका भगवती ददातु शम् ॥ १४ ॥

ॐ अं एं नमः श्रीअच्छुप्तायै विद्यादेव्यै भगवति श्रीअच्छुप्ते इह० शेषं पूर्ववत् ॥१४॥ मानसीं प्रति—

हंसासनसमासीना वरदेन्द्रायुधान्विता । मानसी मानसीं पीडां हन्तु जाम्बूनदच्छविः ॥ १५ ॥

ॐ ह्रीं अर्हं नमः श्रीमानस्यै विद्यादेव्यै भगवति श्रीमानसि इह० शेषं पूर्ववत् ॥ १५ ॥ महामानसीं प्रति—

करखड्गरत्नवरदाढ्यपाणिभृच्छशिनिभा मकरगमना । संघस्य रक्षणकरी जयति महामानसी देवी ॥१६॥

ॐ हं हं हं सं नमः श्रीमहामानस्यै विद्यादेव्यै भगवति महामानसि इह० शेषं पूर्ववत् ॥ १६ ॥ इति प्रत्येकपूजा ॥

ॐ ह्रौं नमः षोडशविद्यादेवीभ्यः सायुधाभ्यः सवाहनाभ्यः सपरिकराभ्यः विघ्नहरीभ्यः शिवंकरीभ्यः भगवत्यः विद्यादेव्यः इह० शेषं पूर्ववत् ॥ इति षोडशविद्यादेवीनां परिपिंडितपूजा ॥ एवं पूजां विधाय षोडशहस्तवस्त्रेण पीठस्याच्छादनम् ॥ इति षष्ठपीठे षोडशविद्यादेवीपूजनम् ॥ ( आ० दि० पृ० १६२ )

अथ सप्तमपीठपूजनम्— प्रथमं गणपतिं प्रति—

ॐ ग गं ग नमो गणपतये स्वाहा ॥ इति मूल० ॥ ॐ नमो गणपतये सायुधाय सवाहनाय सपरिकराय गणपते इह० शेषं ( पुलिंग—एकवचनम् ) पूर्ववत् ॥ १ ॥ मोदकनैवेद्यम् ॥ कार्तिकेय प्रति—

ॐ ब्लीं नमः कार्तिकेयाय स्वाहा ॥ इति मूल० ॥ ॐ नमः कार्तिकेयाय सायुधाय सवाहनाय सपरिकराय कार्तिकेय इह० शेष पूर्ववत् ॥ पुलिं० एक० ॥ २ ॥ क्षेत्रपाल प्रति—

समर—डमर—संगमोद्दामराडम्बराडम्बल चोलसद्विंशति—प्रौढनाहूपमाग्रात्तसर्पाधिपालकृतिः,
निशितकठिनखड्गखड्गागजाकुन्तविस्फोटकोदण्डकाण्डाछलिपट्टिशुलीरु—चक्रक्रमभ्राजिहस्तावलिः ।
अतिघनजनजीवनपूर्णविस्तीर्ण—सद्वर्णदेहद्युताविद्युदुद्भूतिभाग्भोगिहारोरुरत्नच्छटामगतिः,
मनुजदनुजकीकसोत्पन्नकेयूरताडङ्करम्योर्मिकास्फारशीर्षण्य—सिंहासनोल्लासभास्वत्तमः क्षेत्रपः ॥ ३ ॥

ॐ क्षां क्षीं क्षूं क्षैं क्षौं नमः श्रीक्षेत्रपालाय कृष्णगौरकाञ्चनधूसरकपिलवर्णाय कालमेघ—मेघनाद—गिरिविदारण—आह्लादन—प्रह्लादन—खजक—भीम—गोमुख—भूषण—दुरितविदारण—दुरितारि—प्रेतनाथ—प्रभृतिप्रसिद्धाभिधानाय विंशतिभुजादण्डाय बर्बरकेशाय जटाजूटमंडिताय वासुकीकृतजिनोपवीताय तक्षककृतमेखलाय शेषकृतहाराय नानायुधहस्ताय सिंहचर्मावरणाय प्रेतासनाय कुक्कुरवाहनाय त्रिलोचनाय आनन्दभैरवाद्यष्टभैरवपरिवृताय चतुःषष्टि—

योगिनीमध्यगताय श्रीक्षेत्रपालाय श्रीक्षेत्रपाल सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ पुंलिं० एक० ॥ ३ ॥

ॐ मं मं नमः पुरदेवाय स्वाहा ॥ इति मूल० ॥ ॐ नमः पुरदेवाय सायुधाय सवाहनाय पुरदेव इह० शेषं पूर्ववत् ॥ पुंलिं० एक० ॥ ४ ॥ चतुर्णिकायदेवपूजनम्—भवनपतीन् प्रति—प्रथमं आग्नेये—

असुर—नाग—सुपर्ण—विद्युदग्नि—द्वीपोदधि—दिक्—पवन—स्तनितरूपा दशविधा भवनपतयो निजनिजवर्णवस्त्रवाहन-ध्वजधराः सकलत्राः सायुधाः सवाहनाः सपरिकराः प्रभूत—भक्तयः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदमर्घ्यं पाद्यं वलिं चरुं गृह्णन्तु गृह्णन्तु स्वाहा. सन्निहिता भवन्तु भवन्तु स्वाहा, जलं गृह्णन्तु गृह्णन्तु, गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णन्तु गृह्णन्तु, शान्तिं कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ १ ॥ ५ ॥ व्यंतरान्—प्रति—नैऋते—

पिशाच—भूत—यक्ष—राक्षस—किन्नर—किंपुरुष—महोरग—गन्धर्व—अणपन्नि—पणपन्नि-ऋषिपाति—भूतपाति—क्रन्दि-महाक्रन्दि—कूष्मांड—पतगरूप—व्यन्तरा निजनिज० इह० शेषं पूर्ववत् ॥ २ ॥ ६ ॥ ज्योतिष्कान् प्रति— वायव्ये—

चन्द्र—सूर्य—ग्रह—नक्षत्र—तारारूपा ज्योतिष्का निजनिज० शेषं पूर्ववत् ॥ ३ ॥ ७ ॥ वैमानिकान् प्रति ईशाने—

सौधर्मेशान—सनत्कुमार—माहेन्द्र—ब्रह्म—लान्तक—शुक्र—सहस्रारानत—प्राणतारणाच्युत—कल्पभवाः सुदर्शन—सुप्रभ—

मनोरम-सर्वभद्र-सुविशाल-सुमनस-सौमनस-प्रियंकरादित्य-ग्रैवेयकभवा विजय-वैजयन्त-जयन्तापराजित-सर्वार्थसिद्धि-पञ्चानुत्तरभवा वैमानिका निजनिजवर्णवस्त्रवाहनध्वजधराः सकलत्राः सायुधाः सवाहना सपरिकराः प्रभूतभक्तयः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु, इदमर्घ्यं पाद्य बलिं चरु गृह्णन्तु गृह्णन्तु, सन्निहिता भवन्तु भवन्तु स्वाहा, जल गृह्णन्तु गृह्णन्तु, गन्ध० पुष्प० अक्षतान्० फलानि० मुद्रा० धूप० दीप० नैवेद्य० सर्वोपचारान् गृह्णन्तु गृह्णन्तु शान्ति कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० कुर्वन्तु कुर्वन्तु सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ ४ ॥ ८ ॥ (आचारदिनकरे पृष्ठ २०६) ॥ इति सप्तमपीठपूजनम् ॥

एव सर्वेषा पीठाना पूजन विधाय त्रिकोणकुडे होमः ॥ स यथाक्रमः—

१ परमेष्ठिसन्तर्पणे—खड—घृत—पायसैः श्रीखड—श्रीपर्णीसमिद्भिर्होमः ।

२ दिक्पालसन्तर्पणे—घृत—मधु फलैः प्लक्षाश्वत्थसमिद्भिर्होमः ।

३ राशिसन्तर्पणे—क्षीरघृताभ्या न्यग्रोधबिल्वसमिद्भिर्होमः ।

४ नक्षत्रसन्तर्पणे—सर्वौषधिभिर्घृतमधुगुग्गुलफलैः प्लक्षाश्वत्थन्यग्रोधसमिद्भिर्होमः ।

५ ग्रहसन्तर्पणे—क्षीरमधुघृतैः फलसहितैः कपित्थाश्वत्थसमिद्भिर्होमः ।

६ विद्यादेवीसन्तर्पणे—घृतपायसखंडफलैरश्वत्थसमिद्भिर्होमः ।

७ गणपतिसन्तर्पणे—मोदकैः उदुम्बुरसमिद्भिर्होमः ।

८ कार्तिकेयसन्तर्पणे–मधूकपुष्पैः सघृतैः प्लक्षसमिद्भिर्होमः ।
९ क्षेत्रपालसन्तर्पणे–तिलपिण्डैर्धत्तूरसमिद्भिर्होमः ।
१० पुरदैवतसन्तर्पणे–घृत–गुड–क्षौद्रैर्वटसमिद्भिर्होमः ।
११ चतुर्णिकायदेवसन्तर्पणे–नानाफलैः पायसैः प्राप्तसमिद्भिर्होमः ।

[ सर्वत्र होमे मूलमंत्राः । समिधः सर्वत्र प्रादेशप्रमाणाः ]

अग्निस्थापनमन्त्रः– ॐ रं रां रीं रूं रैं रः नमो अग्नये, नमो बृहद्भानवे, नमो अनन्ततेजसे, नमो अनन्तवीर्याय, नमो अनन्तगुणाय, नमो हिरण्यतेजसे, नमो छागवाहनाय, नमो हव्याशनाय, अत्र कुण्डे आगच्छ आगच्छ अवतर अवतर तिष्ठ तिष्ठ स्वाहा ॥ ततो अग्निकुण्डे आदौ कर्पूरं दग्ध्वा आग्नेयकोणतः अग्निं न्यसेत् ॥ ततो वह्निं शमी–पिप्पल–कपित्थ–कुटजबिल्व–आमलकसमिद्भिः प्रबोध्य अनेन मंत्रेण घृत–मधु–तिल–यव–नानाफलानि जुहुयात् । तन्मन्त्रो यथा—

"ॐ अर्हं ॐ अग्ने प्रसन्नः सावधानो भव, तवायमवसरः, तदाकारयेन्द्रं यमं नैर्ऋतिं वरुणं वायुं कुबेरमीशानं नागान् ब्रह्माणं लोकपालान्, ग्रहांश्च सूर्यशशिकुजसौम्यबृहस्पतिकविशनिराहुकेतून्सुरांश्चासुरनागसुपर्णविद्युदग्निद्वीपोदधिदिक्कुमारान् भवनपतीन् पिशाचभूतयक्षराक्षसकिन्नरकिंपुरुषमहोरगगन्धर्वान् व्यन्तरान् चन्द्रार्कग्रहनक्षत्रतारकान्

ज्योतिष्कान् सौधर्मेशानश्रीवत्साखडलपद्मोत्तरब्रह्मोत्तरसनत्कुमारमाहेन्द्रब्रह्मलान्तकशुक्रसहस्रारानतप्राणतारणाच्युतग्रैवेय-कानुत्तरभवान् वैमानिकान् इन्द्रसामानिकान् पार्षद्यत्रयस्त्रिंशल्लोकपालानीकप्रकीर्णकलोकान्तिकाभियोगिकभेद-भिन्नाश्चतुर्णिकायानपि सभार्यान् सायुधबलवाहनान् स्वस्वोपलक्षितचिह्नान्, अप्सरसश्च परिगृहीतापरिगृहीतभेदभिन्नाः ससखीकाः सदासीकाः साभरणा रुचकवासिनीर्दिक्कुमारिकाश्च सर्वाः, समुद्रनदीगिर्याकरवनदेवतास्तदेतान् सर्वांश्च, इदम् अर्घ्यं पाद्यमाचमनीयं बलिं चरुं हुतं न्यस्तं ग्राहय २, स्वयं गृहाण २ स्वाहा अर्हं ॐ।" ( आचारदिनकर पृ० ३६ ) अनेन मन्त्रेण अग्निपूजनं विधाय सप्तपीठहोमः प्रारभेत ।

[ सूचना- मंत्रो बोलती वखते एकवचन द्विवचन के बहुवचन, तेमज पुलिंग के स्त्रीलिंग ज्यां जे प्रमाणे होय ते प्रमाणे ध्यान राखीने उच्चारण करवु ]

॥ ५ परमेष्ठि होममन्त्राः ॥ पी० १ ॥

ॐ रा अर्हन्त' सतर्पिताः सन्तु स्वाहा ॥ १ ॥
ॐ रा सिद्धाः सतर्पिताः सन्तु स्वाहा ॥ २ ॥
ॐ रा आचार्याः सतर्पिताः सन्तु स्वाहा ॥ ३ ॥
ॐ रा उपाध्यायाः सतर्पिताः सन्तु स्वाहा ॥ ४ ॥
ॐ रा साधवः सतर्पिताः सन्तु स्वाहा ॥ ५ ॥

॥ १० दिक्पाल पी० २ ॥

ॐ रां इन्द्रः संतर्पितोऽस्तु स्वाहा ॥ १ ॥
ॐ रां अग्निः संतर्पितोऽस्तु स्वाहा ॥ २ ॥
ॐ रां यमः संतर्पितोऽस्तु स्वाहा ॥ ३ ॥
ॐ रां निर्ऋतिः संतर्पितोऽस्तु स्वाहा ॥ ४ ॥
ॐ रां वरुणः संतर्पितोऽस्तु स्वाहा ॥ ५ ॥
ॐ रां वायुः संतर्पितोऽस्तु स्वाहा ॥ ६ ॥
ॐ रां कुबेरः संतर्पितोऽस्तु स्वाहा ॥ ७ ॥
ॐ रां ईशानः संतर्पितोऽस्तु स्वाहा ॥ ८ ॥
ॐ रां नागाः संतर्पिताःसन्तु स्वाहा ॥ ९ ॥
ॐ रां ब्रह्मा संतर्पितोऽस्तु स्वाहा ॥ १० ॥

॥ १२ राशि–होममंत्राः ॥ पी० ३ ॥

ॐ रां मेषः संतर्पितोऽस्तु स्वाहा । १ ।
ॐ रां वृषः संतर्पितोऽस्तु स्वाहा । २ ।
ॐ रां मिथुनः संतर्पितोऽस्तु स्वाहा । ३ ।
ॐ रां कर्कटः संतर्पितोऽस्तु स्वाहा । ४ ।
ॐ रां सिंहः संतर्पितोऽस्तु स्वाहा । ५ ।
ॐ रां कन्या संतर्पिताऽस्तु स्वाहा । ६ ।
ॐ रां तुलाधरः संतर्पितोऽस्तु स्वाहा । ७ ।
ॐ रां वृश्चिकः संतर्पितोऽस्तु स्वाहा । ८ ।
ॐ रां धन्वी संतर्पितोऽस्तु स्वाहा । ९ ।
ॐ रां मकरः संतर्पितोऽस्तु स्वाहा । १० ।
ॐ रां कुंभः संतर्पितोऽस्तु स्वाहा । ११ ।
ॐ रां मीनः संतर्पितोऽस्तु स्वाहा । १२ ।

## ॥ २८ नक्षत्र-होममंत्राः पी० ४ ॥

ॐ रा नासत्यौ सन्तर्पितौ स्तः स्वाहा । १ ।
ॐ रा यमो सन्तर्पितोऽस्तु स्वाहा । २ ।
ॐ रा अग्निः सन्तर्पितोऽस्तु स्वाहा । ३ ।
ॐ रा ब्रह्मा सन्तर्पितोऽस्तु स्वाहा । ४ ।
ॐ रा चन्द्रः सन्तर्पितोऽस्तु स्वाहा । ५ ।
ॐ रा रुद्रः सन्तर्पितोऽस्तु स्वाहा । ६ ।
ॐ रा अदितिः सन्तर्पितोऽस्तु स्वाहा । ७ ।
ॐ रा बृहस्पति सन्तर्पितोऽस्तु स्वाहा । ८ ।
ॐ रा फणिनः सन्तर्पिताः सन्तु स्वाहा । ९ ।
ॐ रा पितरः सन्तर्पिताः सन्तु स्वाहा । १० ।
ॐ रा योनिः सन्तर्पिताऽस्तु स्वाहा । ११ ।
ॐ रा अर्यमा सन्तर्पितोऽस्तु स्वाहा । १२ ।

ॐ रा दिनकरः सन्तर्पितोऽस्तु स्वाहा । १३ ।
ॐ रा विश्वकर्मा सन्तर्पितोऽस्तु स्वाहा । १४ ।
ॐ रा वायुः सन्तर्पितोऽस्तु स्वाहा । १५ ।
ॐ रा इन्द्राग्नी सन्तर्पितौ स्तः स्वाहा । १६ ।
ॐ रा मित्रः सन्तर्पितोऽस्तु स्वाहा । १७ ।
ॐ रा इन्द्रः सन्तर्पितोऽस्तु स्वाहा । १८ ।
ॐ रा निर्ऋतिः सन्तर्पितोऽस्तु स्वाहा । १९ ।
ॐ रा जलः सन्तर्पितोऽस्तु स्वाहा । २० ।
ॐ रा विश्वदेवाः सन्तर्पिताः सन्तु स्वाहा । २१ ।
ॐ रा ब्रह्मा सन्तर्पितोऽस्तु स्वाहा । २२ ।
ॐ रा विष्णुः सन्तर्पितोऽस्तु स्वाहा । २३ ।
ॐ रा वसवः सन्तर्पिताः सन्तु स्वाहा । २४ ।

द्वितीयदिने
प्रात
करणीय

ॐ रां वरुणः सन्तर्पितोऽस्तु स्वाहा । २५ ।
ॐ रां अजपादः सन्तर्पितोऽस्तु स्वाहा । २६ ।
ॐ रां अहिर्बुध्नः सन्तर्पितोऽस्तु स्वाहा । २७ ।
ॐ रां पूषा सन्तर्पितोऽस्तु स्वाहा । २८ ।

॥ ९ ग्रह होममन्त्राः पी० ५ ॥

ॐ रां आदित्यः सन्तर्पितोऽस्तु स्वाहा ॥१॥
ॐ रां चन्द्रः सन्तर्पितोऽस्तु स्वाहा ॥२॥
ॐ रां मङ्गलः सन्तर्पितोऽस्तु स्वाहा ॥३॥
ॐ रां बुधः सन्तर्पितोऽस्तु स्वाहा ॥४॥
ॐ रां गुरुः सन्तर्पितोऽस्तु स्वाहा ॥५॥
ॐ रां शुक्रः सन्तर्पितोऽस्तु स्वाहा ॥६॥
ॐ रां शनैश्चरः सन्तर्पितोऽस्तु स्वाहा ॥७॥
ॐ रां राहुः सन्तर्पितोऽस्तु स्वाहा ॥८॥
ॐ रां केतुः सन्तर्पितोऽस्तु स्वाहा ॥९॥

॥ १६ विद्यादेवी होममन्त्राः पी० ६ ॥

ॐ रां रोहिणी सन्तर्पितास्तु स्वाहा ॥१॥
ॐ रां प्रज्ञप्ती सन्तर्पितास्तु स्वाहा ॥२॥
ॐ रां वज्रशृङ्खला सन्तर्पितास्तु स्वाहा ॥३॥
ॐ रां वज्राङ्कुशी सन्तर्पितास्तु स्वाहा ॥४॥
ॐ रां अप्रतिचक्रा सन्तर्पितास्तु स्वाहा ॥५॥
ॐ रां पुरुषदत्ता सन्तर्पितास्तु स्वाहा ॥६॥

ॐ रा काली सन्तर्पितास्तु स्वाहा ॥७॥
ॐ रा महाकाली सन्तर्पितास्तु स्वाहा ॥८॥
ॐ रा गौरी सन्तर्पितास्तु स्वाहा ॥९॥
ॐ रा गान्धारी सन्तर्पितास्तु स्वाहा ॥१०॥
ॐ रा महाज्वाला सन्तर्पितास्तु स्वाहा ॥११॥
ॐ रा मानवी सन्तर्पितास्तु स्वाहा ॥१२॥
ॐ रा वैरोट्या सन्तर्पितास्तु स्वाहा ॥१३॥
ॐ रा अच्छुप्ता सन्तर्पितास्तु स्वाहा ॥१४॥
ॐ रा मानसी सन्तर्पितास्तु स्वाहा ॥१५॥
ॐ रा महामानसी सन्तर्पितास्तु स्वाहा ॥१६॥

॥ गणपत्यादि–होममन्त्राः पी० ७ ॥

ॐ रा गणपतिः सन्तर्पितोऽस्तु स्वाहा ॥
ॐ रा कार्तिकेयः सन्तर्पितोऽस्तु स्वाहा ॥
ॐ रा क्षेत्रपालः सन्तर्पितोऽस्तु स्वाहा ॥
ॐ रा पुरदेवता सन्तर्पिताऽस्तु स्वाहा ॥
ॐ रा चतुर्णिकायदेवा॰ सन्तर्पिताः सन्तु स्वाहा ॥

होमप्रान्ते इम मन्त्रं पठेत् । ॐ अर्हं अग्ने ! आहुतिं गृहाण २, शान्ति कुरु २, तुष्टि कुरु २, ऋद्धि कुरु २, वृद्धि कुरु २, सर्वसमीहितानि कुरु २ स्वाहा । 'स्वाहा' इत्युक्त्वा घृतेन सह शुष्क नालिकेर जुहुयात् । तदनन्तरे सर्वे स्नात्रकारा॰ अवशिष्टहोमद्रव्याणि जुहुयुः । तत आरात्रिक मगलदीपश्च पूर्ववत् । तत आज्ञाहीन॰ इत्यादि पूर्ववत् पठनीयम् । इति द्वितीयदिने प्रातः करणीयः विधिः ॥

द्वितीयदिने
प्रात
करणीय

## ॥ बृहत्स्नात्रविधिः ॥

[ तृतीयदिने प्रातः बृहत्स्नात्रविधिकरणात् पूर्वं पृष्ठ २ तः पृष्ठ ८ "इति जिनपूजनम्" तत् पर्यंतं पूजनविधिं विधाय तत्पश्चात् अग्रे बृहत्स्नात्रविधिः करणीयः ]

तद्यथा— तत्रादौ श्रीजिनबिम्बस्य पंचामृतस्नात्रं कुर्वीत । तद्विधिर्यथा—पुष्पाञ्जलिं करे गृहीत्वा—

पूर्वं जन्मनि मेरुभूध्रशिखरे सर्वैः सुराधीश्वरै—राज्योद्भूतिमहे महर्द्धिसहितैः पूर्वेऽभिषिक्ता जिनाः ।
तामेवानुकृतिं विधाय हृदये भक्तिप्रकर्षान्विताः, कुर्मः स्वस्वगुणानुसारवशतो बिम्बाभिषेकोत्सवम् ॥१॥

इति पुष्पाञ्जलिक्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—

मृत्कुंभाः कलयन्तु रत्नघटितां पीठं पुनर्मेरुता—मानीतानि जलानि सप्तजलधिक्षीराज्यदध्यात्मताम् ।
बिम्बं पारगतत्वमत्र सकलः संघः सुराधीशतां, येन स्यादयमुत्तमः सुविहितः स्नात्राभिषेकोत्सवः ॥ २ ॥

इति पुष्पाञ्जलिक्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—

आत्मशक्तिसमानीतैः सत्यं चामृतवस्तुभिः । तद्बाधिकल्पनां कृत्वा स्नपयामि जिनेश्वरम् ॥ ३ ॥

इति पुष्पाञ्जलिक्षेपः । ततः क्षीरभृत कलशं गृहीत्वा—

भगवन्मनोगुणयशोऽनुकारि–दुग्धाब्धितः समानीतम् । दुग्ध विदग्धहृदयं पुनातु दत्त जिनस्नात्रे ॥ १ ॥

इति क्षीरस्नात्रम् । ततो दधिभृतं कलश गृहीत्वा—

दधिमुखमहीध्रवर्णं दधिसागरतः समाहृत भक्त्या । दधि विदधातु शुभविधिं दधिसारपुरस्कृतं जिनस्नात्रे ॥२॥

इति दधिस्नात्रम् । ततो घृतभृत कुंभं गृहीत्वा—

स्निग्धं मृदु पुष्टिकर जीवनमतिशीतल सदाभिरूप्यम् । जिनमतवद्घृतमेतत् पुनातु लग्न जिनस्नात्रे ॥३॥

इति घृतस्नात्रम् । पुनरिक्षुभृत कलश गृहीत्वा—

मधुरिमधुरिणविधुरित–सुधाधराधार आत्मगुणवृत्त्या । शिक्षयतादिक्षुरसो विचक्षणौघ जिनस्नात्रे ॥ ४ ॥

इति इक्षुरसस्नात्रम् । ततः शुद्धजलभृत कलश गृहीत्वा—

जीवनममृत प्राणदमकलुषितमदोषमस्तसर्वरुजम् । जलममलमस्तु तीर्थाधिनाथबिम्बानुगे स्नात्रे ॥ ५ ॥

इति जलस्नात्रम् । इति पञ्चामृतस्नात्रम् । पुनः सहस्रमूलमिश्रजलकलश गृहीत्वा—

तृतीयदिने
प्रात
करणीय
॥ ९१ ॥

विघ्नसहस्रोपशमनं सहस्रनेत्रप्रभावसद्भावम् । दलयतु सहस्रमूलं शत्रुसहस्रं जिनस्नात्रे ॥ १ ॥

ततः शतमूलमिश्रजलकलशं गृहीत्वा——

शतमर्त्यसमानीतं शतमूलं शतगुणं शताख्यं च । शतसंख्यं वांछितमिह जिनाभिषेके सपदि कुरुतात् ॥१॥

अनेन शतमूलस्नात्रम् । ततः सर्वौषधिमिश्रजलकलशं गृहीत्वा——

सर्वप्रत्यूहहरं सर्वसमीहितकरं विजितसर्वम् । सर्वौषधिमंडलमिह जिनाभिषेके शुभं ददताम् ॥ १ ॥

अनेन सर्वौषधिस्नात्रम् । ततो धूपं गृहीत्वा——

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्षात्, प्रौढिम्नात्मप्रकर्षः क्षितिरुहरसजः क्षीणपापावगाहः ।
धूपोऽकूपारकल्पः प्रभवमृतिजराकष्टविस्पष्टदुष्ट——स्फूर्जत्संसारपाराधिगममतिधियां विश्वभर्तुः करोतु ॥१॥

अनेन धूपोत्क्षेपणम् । ततः शक्रस्तवपाठः । ततो यथाशक्त्या स्वर्ण–रूप्य–ताम्र–त्रिकयोग–रीति–मृण्मय–कलश-समारचनम् । ते च कलशाः स्थपनकोपरि स्थाप्यन्ते । ततो यथाशक्ति स्नात्रसंख्यया अष्टोत्तरशत–चतुःषष्टि–पंचविंशति–षोडश–अष्ट–पंच–चतुस्त्रि–द्वि–एक–संख्याः ते च चन्दनागरु–कर्पूर–कस्तूरी–कुङ्कुमैः स्वस्तिककरणैश्चतु-र्दिक्षु पूज्यन्ते । तत्कण्ठेषु पुष्पमालाभिर्विभूषणम् । ततस्ते कलशाः सर्वतीर्थाहृतेन पूर्वोक्तजलमंत्रपूतेन चन्दनागरु-

तृतीयदिने
प्रातः
करणीयः

कस्तूरीकर्पूरकुङ्कुममिश्रितेन पाटलादिपुष्पाधिवासितेन निर्मलजलेन पूरणीया' ततस्तेन निजनिजपरिकरयुताः स्नात्रकराः पूर्वोक्तवेशभृतो जिनोपवीतोत्तरासङ्गयुजो बद्धधम्मिलाः कृतस्नाना द्वादशतिलकाङ्किताः परमेष्ठिमन्त्र पठित्वा तान् कलशान् स्वस्वकरयोर्गृह्णन्ति । ततस्तेऽपरे च श्राद्धाः स्वस्वाभ्यासानुसारेण जिनस्तुतिपट्पदद्र-हास्तोत्रादि परिवर्त्तयन्ति । पूर्वकविकृतानि जिनाभिषेककाव्यानि पठन्ति । तत'—

नमो अरिहताण, नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्य' ।

पूर्वं जन्मनि विश्वभर्तुरधिक सम्यक्त्वभक्तिस्पृश', सूते. कर्म समीरवारिदमुखं काष्ठाकुमार्यो व्यधुः ।
तत्काल तदिपेश्वरस्य निनिड सिंहासने प्रोन्नत, वातोद्धूतसमुद्धुरध्वजपटश्रेण्या स्थितिं व्यानशे ॥१॥

क्षोभात्तत्र सुरेश्वरः प्रसृमरक्रोधकमाक्रान्तधीः कृत्वालक्तकसिक्तकर्मसदृश चक्षुःसहस्र दधौ ।
यत्र च स्मरणागतं करगत कुर्वन् प्रयुक्तावधि, ज्ञानात्तीर्थकरस्य जन्म भुवने भद्रकर ज्ञातवान् ॥२॥

नम नम इति शब्दं ख्यापयस्तीर्थनाथं, स झटिति नमति स्म प्रौढसम्यक्त्वभक्तिः ।
तदनु दिवि विमाने सा सुघोषाख्यघंटाः सुररिपुमदमोघा घातिशब्दं चकार ॥३॥

द्वात्रिंशल्लक्षविमानमडले तत्समा महाघंटाः । ननदु. सुदुःप्रधर्षा हर्षोत्कर्षं वितन्वन्त्यः ॥४॥

तस्मान्निश्चित्य विश्वाधिपतिजनुरयो निर्जरेन्द्रः स्वकल्पान्,
कल्पेन्द्रान् व्यन्तरेन्द्रानपि भवनपतींस्तारकेन्द्रान् समस्तान् ।
आह्वायाह्वाय तेषां स्वमुखभवगिराख्याय सर्वं स्वरूपं,
श्रीमत्कार्त्तस्वराद्रेः शिरसि परिकरालंकृतान् प्राहिणोच्च ॥ ५ ॥

ततः स्वयं शक्रसुराधिनाथः प्रविश्य तीर्थङ्करजन्मगेहम् ।
परिच्छदैः सार्द्धमथो जिनाम्बां प्रस्वापयामास वरिष्ठविद्यः ॥ ६ ॥

कृत्वा पञ्चवपूंषि विष्टपपतिः संधारणं हस्तयो–श्छत्रस्योद्वहनं च चामरयुगप्रोद्धासनाचालनम् ।
वज्रेणापि धृतेन नर्त्तनविधिं निर्वाणदातुः पुरो, रूपैः पञ्चभिरेवमुत्सुकमनाः प्राचीनबर्हिर्व्यधात् ॥७॥

सामानिकाङ्गरक्षैरेवं परिवारितः सुराधीशः, बिभ्रत् त्रिभुवननाथं प्राप सुराद्रिं सुरगणाढ्यम् ॥८॥

तत्रेन्द्रास्त्रिदशाप्सरःपरिवृता विश्वेशितुः संमुखं, मंक्ष्वागत्य नमस्कृतिं व्यधुरलं स्वालंकृतिभ्राजिताः ।
आनन्दान्ननृतुस्तथा सुरगिरिस्तूर्यत्रिराभास्वरैः, शृङ्गैः काञ्चनदानकर्मनिरतो भाति स्म भक्त्या यथा ॥९॥

अतिपांडुकंबलाया महाशिलायाः शशांकधवलायाः । पृष्ठे शशिमणिरचितं पीठमधुर्देवगणवृषभाः ॥१०॥

तत्राधायोत्सङ्गे ईशानसुरेश्वरो जिनाधीशम् । पद्मासनोपविष्टो निबिडां भक्तिं दधौ मनसि ॥११॥

इन्द्रादिष्टास्तत आभियोगिकाः कलशगणमथानिन्युः । वेदरसखनसुमंख्यं मणिरजतसुवर्णमृद्रचितम् ॥१२॥

कुम्भाश्च ते योजनमात्रवक्त्रा आयाम औनत्यमथैषु चैवम् ।
दशाष्टनार्हत्करयोजनानि द्वित्येकधातुप्रतिपगगर्भाः ॥ १३ ॥

नीरैः सर्वसरित्तडागजलधिप्रख्यान्यनीराशया–नीतैः सुन्दरगन्धगर्भिततरैः स्वच्छैरल शीतलैः ।
भूत्यैर्देवपतेर्मणिमयमहापीठस्थिताः पूरिताः, कुम्भास्ते कुसुमस्रजा समुदयैः कण्ठेषु सभाविताः ॥१४॥

पूर्वमच्युतपतिर्जिनेशितुः स्नात्रकर्म विधिवद् व्यधान्महत् ।
तैर्महाकलशवारिभिर्घनैः प्रोल्लसन्मलयगन्धधारिभिः ॥१५॥

चतुर्वृषभशृङ्गोत्थ–धाराष्टकमुदंचयन् । सौधर्माधिपतिः स्नात्र विश्वभर्तुरपूरयत् ॥ १६ ॥

शेष क्रमेण तदनन्तरमिन्द्रवृन्द कल्पासुरक्षननाथमुख व्यधत्त ।
स्नात्र जिनस्य कलशैः कलितप्रमोदं भावारवेपविनिवारितसर्वपापम् ॥१७॥

तस्मिन् क्षणे बहुलवादितगीतनृत्य–गर्भं महं च सुमनोऽप्सरसो व्यधुस्तम् ।
येनादधे स्फुटसदाविनिविष्टयोग–स्तीर्थंकरोऽपि हृदये परमाणुचित्तम् ॥१८॥

मेरुशृंगे च यत्स्नात्रं, जगद्भर्त्तुः सुरैः कृतम् । बभूव तदिहास्त्वेत-दस्मत्करनिषेकतः ॥१९॥

इति पठित्वा सर्वैः स्नात्रकारैः समकालं जिनविम्बे कलशाभिषेकः करणीयः। एवमष्टोत्तरशतादिवारान् (१०८ बारान् कलशाभिषेकः) पुनःपुनरन्तिमं (मेरुशृंगे०) श्लोकं पठित्वा जिनस्नात्रं करणीयम् । एवं स्नात्रविधौ निर्वर्तिते कोमलैर्धूपचूर्णवासितैर्वस्त्रैर्जिनविम्बं मार्जयेत् । ततः कस्तूरिका–कुङ्कुम–कर्पूर–श्रीखंडादिविलेपनं गृहीत्वा–

कस्तूरिकाकुङ्कमरोहणद्रुः कर्पूरकक्कोलविशिष्टगन्धम् । विलेपनं तीर्थपतेः शरीरे करोतु सङ्घस्य सदा विवृद्धिम् ॥१॥
तुरापाद् स्नात्रपर्यन्ते विदधे यद्विलेपनम् । जिनेश्वरस्य तद्भूया-दत्र विम्बेऽस्मदाहत्तम् ॥२॥
अनेन वृत्तद्वयेन विलेपनं विम्बस्य । ततः पुष्पमालादि गृहीत्वा––

मालतीविचकिलोज्ज्वलमल्लीकुन्दपाटलसुवर्णसुमैश्च। केतकैर्विरचिता जिनपूजा मङ्गलानि सकलानि विदध्यात् ॥१॥
स्नात्रं कृत्वा सुराधीशै-र्जिनाधीशस्य वर्ष्मणि । यत्पुष्पारोपणं चक्रे तदस्त्वस्मत्करैरिह ॥२॥

इति वृत्तद्वयेन विम्बे पुष्पमालादिपूजा । ततो मुकुटकुंडलहारादिभूषणानि गृहीत्वा––

केयूरहारकटकैः पट्टभिः किरीटैः सत्कुंडलैर्मणिमयीभिरथोर्मिकाभिः ।
विम्बं जगत्त्रयपतेरिह भूषयित्वा पापोच्चयं सकलमेव निकृन्तयामः ॥१॥
या भूषा त्रिदशाधीशैः स्नात्रान्ते मेरुमस्तके । कृता जिनस्य सात्रास्तु भविकैर्भूषणान्विता ॥२॥

तृतीयदिने प्रातः करणीयः

॥ ९६ ॥

इति वृत्तद्वयेन विम्बस्य भूषणपरिधानम् । ततः फलानि गृहीत्वा—

सन्नालिकेरफलपूररसालजम्बू–द्राक्षापरूपकसुदाडिमनागरङ्गैः ।
ग्रातामपूगकदलीफलजमुख्यैः श्रेष्ठैः फलैर्जिनपतिं परिपूजयामः ॥१॥

यत्कृतं स्नात्रपर्यन्ते सुरेन्द्रैः फलढौकनम् । तदिहास्मत्करादस्तु यथासम्पत्तिनिर्मितम् ॥२॥

इति वृत्तद्वयेन विम्बाग्रे फलढौकनम् । ततोऽक्षतान् गृहीत्वा—

अखण्डिताक्षतैः पूजा या कृता हरिणार्हतः । सास्तु भव्यकराम्भोजै–रत्र विम्बे विनिर्मिता ॥१॥

इति वृत्तेन विम्बाग्रेऽक्षतढौकनम् । ततो जलभृतकलशं गृहीत्वा—

निर्झरनदीपयोनिधि–वापीकूपादितः समानीतम् । सलिलं जिनपूजाया–मद्याय निहन्तु भवदाहम् ॥१॥

मेरुशृङ्गे जगद्भर्तुः सुरेन्द्रैर्यज्जलार्चनम् । विहितं तदिह प्रौढ–मातनोत्वस्मदादृतम् ॥२॥

इति वृत्तद्वयेन विम्बाग्रे जलकलशढौकनम् । ततो धूपं गृहीत्वा—

कर्पूरागरुचन्दनादिभिरलं कस्तूरिकामिश्रितैः, सिल्हाद्यैः सुसुगन्धिभिर्नहुतरैर्धूपैः कृशानूद्गतैः ।
पातालक्षितिगोनिवासिमरुतां संप्रीणकैरुत्तमै–र्धूमाक्रान्तनभस्तलैर्जिनपतिं सपूजयामोऽधुना ॥१॥

या धूपपूजा देवेन्द्रैः स्नात्रानन्तरमादधे । जिनेन्द्रस्यास्मदुत्कर्षा–दस्तु स्नात्रमहोत्सवे ॥२॥

इति वृत्तद्वयेन धूपोत्क्षेपणम् । ततो दीपं गृहीत्वा–

अन्तर्ज्योतिर्द्योतितो यस्य कायो यत्संस्मृत्या ज्योतिरुत्कर्षमेति ।
तस्याभ्यासे निर्मितं दीपदानं लोकाचारख्यापनाय प्रभाति ॥१॥

या दीपमाला देवेन्द्रैः सुमेरौ स्वामिनः कृता । स्नात्रान्तर्गतमस्माकं विनिहन्तु तमोभरम् ॥२॥

इति वृत्तद्वयेन दीपदानम् । ततो ( षट्रस ) नैवेद्यं गृहीत्वा––

ओदनैर्विविधैः शाकैः पक्वान्नैः षड्रसान्वितैः । नैवेद्यैः सर्वसिद्ध्यर्थं जायतां जिनपूजनम् ॥१॥

इति नैवेद्यढौकनम् । ततो गोधूमादिसर्वधान्यं गृहीत्वा–

गोधूमतन्दुलतिलैर्हरिमन्थकैश्च मुद्गाढकीयवकलायमकुष्टकैश्च ।
कुल्मापवल्लवरचीनकदेवधान्यै–र्मर्त्यैः कृता जिनपुरः फलदोपदास्तु ॥१॥

इति जिनाग्रे सर्वधान्यढौकनम् । ततः सर्ववेपवारं गृहीत्वा–

शुठीकणामरिचरामठजीरधान्य-श्यामासुराप्रभृतिभिः पडुवेसनारैः ।
सढौकन जिनपुरो मनुजैर्निधीय-मान मनासि यशसा निर्मलीकरोतु ॥१॥

इति जिनाग्रे सर्ववेसवारढौकनम् । ततः सर्वौषधिं गृहीत्वा-

उशीरवटिकाशिरोज्ज्वलनचव्यधात्रीफलै-र्नलासलिलवत्सकैर्घनविभावरीनासकैः ।
मचावरनिदारिकामिशिशताह्वयाचन्दनैः, प्रियगुतगरैर्जिनेश्वरपुरोऽस्तु मे ढौकनम् ॥१॥

इति जिनाग्रे सर्वौषधिढौकनम् । ततस्ताम्बूलं गृहीत्वा-

भुजङ्गवल्लीछदनैः सिताभ्र-कस्तुरिकैलासुरपुष्पमिश्रैः ।
सजातिकोशैः सममेव चूर्णै-स्ताम्बूलमेव तु कृत जिनाग्रे ॥१॥

इति जिनाग्रे ताम्बूलढौकनम् । ततो वस्त्र गृहीत्वा-

सुमेरुशृंगे सुरलोकनाथः स्नात्रावसने प्रविलिप्य गन्धैः ।
जिनेश्वर वस्त्रचयैरनेकै-राच्छादयामास निषक्तभक्तिः ॥१॥

ततस्तदनुकारेण साम्प्रतं श्राद्धपुङ्गवाः । कुर्वन्ति वसनैः पूजां त्रैलोक्यस्वामिनोऽग्रतः ॥२॥

इति वृत्तद्वयेन बिम्बस्य वस्त्रपूजा । ततः सुवर्णरूप्यमुद्रा गृहीत्वा—

सुवर्णमुद्रामणिभिः कृतास्तु पूजा जिनस्य स्नपनावसाने ।
अनुष्ठिता पूर्वसुराधिनाथैः सुमेरुशृंगे धृतभावशुद्धैः ॥१॥

अनेन वृत्तेन सुवर्णरूप्यटङ्कमुद्रामणिभिर्बिम्बस्याङ्गपूजा । ततो जिनबिम्बाग्रतो विस्तीर्णश्रीपर्णिपीठं अन्योत्तमकाष्ठपीठं वा न्यस्य भूमिं वा शुद्धगोमयेन समारचय्य पुष्पाञ्जलिं गृहीत्वा—

मङ्गलं श्रीमदर्हन्तो, मङ्गलं जिनशासनम् । मङ्गलं सकलः सङ्घो, मङ्गलं पूजका अमी ॥१॥

इति ( अष्टमंगल ) पीठोपरि समारचितभूमौ वा पुष्पाञ्जलिक्षेपः । (१) ततो दर्पणालेखनसामग्रीं गृहीत्वा—

आत्मालोकविधौ जनोऽपि सकलस्तीव्रं तपो दुश्चरं, दानं ब्रह्म परोपकारकरणं कुर्वन् परिस्फूर्जति ।
सोऽयं यत्र सुखेन राजति स वै तीर्थाधिपस्याग्रतो, निर्मेयः परमार्थवृत्तिविदुरैः संज्ञानिभिर्दर्पणम् ॥१॥

अनेन वृत्तेन चन्दनमयं वा स्वर्णरूप्ययवमयं वा तन्दुलमयं वा जिनबिम्बाग्र दर्पणं लिखेत् । (२) ततो भद्रासनालेखनम्—

जिनेन्द्रपादैः परिपूज्य पुष्टै-रतिप्रभानैरपि सन्निकृष्टम् ।
भद्रासन भद्रकर जिनेन्द्र-पुरो लिखेन्मङ्गलसत्प्रयोगम् ॥२॥

पूर्ववत् भद्रासन लिखेत् । (३) अथ वर्द्धमानसपुटलेखनवृत्तम्—

पुण्य यशःसमुदयः प्रभुता महत्त्व सौभाग्यधीविनयशर्ममनोरथाश्च ।
वर्द्धन्त एव जिननायक ते प्रसादात् तद्वर्द्धमानयुगसपुटमादधानः ॥३॥

वर्द्धमानयुगमपुट लिखेत् । (४) पुनः पूर्णकलशालेखनम्—

विश्वत्रये च स्वकुले जिनेशो व्याख्यायते श्रीकलशायमानः ।
अतोऽत्र पूर्णकलश लिखित्वा जिनार्चनाकर्म कृतार्थयामः ॥४॥

पूर्णकलश लिखेत् । (५) अथ श्रीवत्सलेखनम्—

अन्त' परम ज्ञान यद् भाति जिनाधिनाथहृदयस्य । तच्छ्रीवत्सव्याजात् प्रकटीभूत बहिर्वन्दे ॥५॥

श्रीवत्स लिखेत् । (६) अथ मत्स्ययुग्मलेखनम्—

त्वद्व्यपश्चशरकेतनभावक्लृप्त कर्तुं मुधा भुवननाथ निजापराधम् ।

सेवां तनोति पुरतस्तव मीनयुग्मं श्राद्धैः पुरो विलिखितोरुनिजांगयुक्त्या ॥६॥

मत्स्ययुग्मं लिखेत् । (७) अथ स्वस्तिकलेखनम्—

स्वस्तिश्रीभूगगननागविष्टपे—प्रूदितं जिनवरोदयेक्षणात् ।
स्वस्तिकं तदनुमानतो जिनवरस्याग्रतो बुधजनैर्विलिख्यते ॥७॥

स्वस्तिकं लिखेत् । (८) अथ नन्द्यावर्त्तलेखनम्—

त्वत्सेवकानां जिननाथ दिक्षु सर्वासु सर्वे निधयः स्फुरन्ति ।
अतश्चतुर्द्धा नवकोणनन्द्या—वर्त्तः सतां वर्त्तयतां सुखानि ॥८॥

नन्द्यावर्त्तं लिखेत् । ततोऽष्टमङ्गलानि गन्ध—पुष्प—फल—पक्वान्नादिभिः पूजयेत् । ततः पुष्पमालां गृहीत्वा—
दर्पणभद्रासनवर्द्धमान—पूर्णघटमत्स्ययुग्मैश्च । नन्द्यावर्त्तश्रीवत्सविस्फुटस्वस्तिकैर्जिनार्चास्तु ॥१॥

अनेन वृत्तेन जिनबिम्बोपरि पुष्पमालां न्यसेत् । तदनन्तरं पुष्पं गृहीत्वा—

देवेन्द्रैः कनकाद्रिमूर्धनि जिनस्नात्रेण गन्धार्पणं, पुष्पैर्भूषणवस्त्रमङ्गलगणैः संपूज्य मातुः पुनः ।
आनीयान्यत एवमत्र भविका बिम्बं जगत्स्वामिन—स्तत्कृत्यानि समाप्य कल्पितमतः संप्रापयत्यास्पदम् ॥१॥

अनेन विम्ब स्नपनपीठादुत्थाप्य यथास्थान स्थापयेत् । तत —

आज्ञाहीन क्रियाहीन मन्त्रहीनं च यत्कृतम् । तत्सर्वं कृपया देव क्षमस्व परमेश्वर ॥१॥
आह्वान नैव जानामि न जानामि विसर्जनम् । पूजाविधि न जानामि प्रसीद परमेश्वर ॥२॥

कीर्तिश्रियो० आशातना या० इत्यादि पठनीयम् । इति पुष्पारोपणम् । तदनन्तर पूर्वरीत्या आरात्रिकमाङ्ग-लिकादिकर्मकरण पूजाकर्मवत् । (आरात्रिक मगलदीपश्च) तदनन्तर चैत्यवन्दन साधुवन्दनं च । इति बृहत्स्नात्रम्* ॥

एव विधिना स्नात्रविधिनान्तर स्नात्रोदक सर्व ग्राह्य सर्वतीर्थजल च समील्य बिम्बाग्रे सुविलिप्तभूमौ चतुष्किकोपरि न्यस्तस्य यथासपत्तिकृतस्य, सद्धकठस्य, मदनफलादिरक्षस्य शान्तिकलशस्य मध्ये निक्षिपेत्। रक्षादि बन्धन सर्वत्र शान्तिमत्रेण तत कलशमध्ये स्वर्णरूप्यमुद्रा पुगफलानि, नालिकेर च शान्तिमंत्रेण न्यसेत्-तत शुद्धोदकैरखडधारया, द्वौ स्नात्रकारौ स्नात्रकलश पूरयत । उपरि छत्राकारेण (छदाधारेण) आकलशमूलावलम्बि सदशवस्त्र बध्नीयात् । गुरुश्च कुशेन ता जलधारा, शान्तिकलशे निपतन्तीं, शान्तिदडक पठन्नभिमन्त्रयति । शान्तिदडको यथा—

---

*नवप्रतिष्ठिते विम्बे प्रतिष्ठास्वखिलास्वपि शान्तिके पौष्टिके चैव पर्वसु प्रौढकर्म्मसु ॥१॥
तीर्थे नव्यासु यात्रासु प्राप्ते विम्बे नवेपि च, बृहत्स्नात्रविधिर्योज्यः स्याद्वादोऽन्यत्र कर्मणि ॥२॥
इति बृहत्स्नात्रविध्युपयोगः ॥ आचारदिनकर पृ० १८९ ॥

## ॥ अथ श्रीशान्तिदण्डकः ॥

नमः श्रीशान्तिनाथाय, सर्वविघ्नापहारिणे ।
सर्वलोकप्रकृष्टाय, सर्ववांछितदायिने. ॥१॥

इह हि भरतैरावतविदेहजन्मनां, तीर्थंकराणां जन्मसु चतुःषष्टिसुरासुरेन्द्राश्च चलितासना विमानघंटाटंकारक्षुभिताः प्रयुक्तावधिज्ञानेन, जिन-जन्म-विज्ञान-परमतम-प्रमोद-पूरिताः मनसा नमस्कृत्य जिनेश्वरं सकलसामानिकांगरक्षपार्षद्यत्रायस्त्रिंशल्लोकपालाकनिप्रकीर्णकाभियोगिकसहिताः साप्सरोगणाः सुमेरुशृंगमागच्छन्ति. तत्र च सौधर्मेन्द्रेण विधिना करसंपुटानीतांस्तीर्थकरान् पांडुकंबलातिपांडुकंबलारक्तकंबलातिरक्तकंबलाशिलासु, न्यस्तसिंहासनेषु, सुरेन्द्रक्रोडस्थितान् कल्पितमणिसुवर्णादिमययोजनमुखकलशोद्गतैस्तीर्थवारिभिः स्नपयन्ति. ततो गीत-नृत्य-वाद्य-महोत्सवपूर्वकं शान्तिमु-

द्घोषयन्ति ततस्तत्कृतानुसारेण वयमपि तीर्थंकरस्नात्रकरणानन्तर शान्तिमुद्घोषयामः सर्वे कृतावधानाः सुरासुरनरोरगाः शृण्वन्तु स्वाहा

ॐ अर्हं नमो नमो जय जय पुण्याहं पुण्याहं, प्रीयन्ता प्रीयन्ता भगवन्तोऽर्हन्तो विमलकेवलास्त्रिलोकपूज्या-स्त्रिलोकोद्योतकरा महातिशया महानुभावा महातेजसो महापराक्रमा महानन्दा'

ॐ ऋषभ अजित–संभव–अभिनंदन, सुमति–पद्मप्रभ–सुपार्श्व-चन्द्रप्रभ-सुविधि-शीतल–श्रेयास–वासुपूज्य–विमल–अनंत–धर्म–शान्ति–कुंथु–अर–मल्लि–मुनिसुव्रत–नमि–नेमि–पार्श्व–वर्धमानान्ता जिना अतीतानागतवर्तमानाः पचदशकर्मभूमिसंभवा विहरमाणाश्च, शाश्वतप्रतिमागता भवनपतिव्यंतरज्योतिष्क–वैमानिक–भवनसंस्थिताः तिर्यग्लोक–नंदीश्वर-रुचकेषुकार–कुंडल-वैताढ्य-गजदंत-वक्षस्कार–मेरुकृतनिलया जिनाः सुपूजिताः सुस्थिता. शान्तिकरा भवन्तु स्वाहा.

ॐ देवाश्चतुर्णिकाया भवनपति–व्यंतर–ज्योतिष्क-वैमानिकास्तदिन्द्राश्च साप्सरसः

सायुधाः सवाहनाः सपरिकराः प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ रोहिणी-प्रज्ञप्ति-वज्रशृंखला-वज्रांकुशी-अप्रतिचक्रा-पुरुषदत्ता-कालि-महाकालि-गौरी-गान्धारी-सर्वास्त्रा-महाज्वाला-मानवी-वैरोट्या--अच्छुप्ता-मानसी-महामानसीरूपाः षोडशविद्यादेव्यः सुपूजिताः प्रीताः शान्तिकारिण्यो भवन्तु स्वाहा.

ॐ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुपरमेष्ठिनः सुपूजिताः प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ अश्विनी-भरणी-कृतिका-रोहिणी-मृगशीर-आर्द्रा-पुनर्वसु--पुष्य-.आश्लेषा-मघा-पूर्वाफाल्गुनी-उत्तराफाल्गुनी-हस्त-चित्रा-स्वाति-विशाखा-अनुराधा-ज्येष्ठा-मूल-पूर्वाषाढा-उत्तराषाढा-अभिजित्-श्रवण-धनिष्ठा-शतभिषक्-पूर्वाभद्रपदाउत्तराभद्रपदारेवती-रूपाणि नक्षत्राणि सुपूजितानि प्रीतानि शान्तिकराणि भवन्तु स्वाहा.

ॐ मेष-वृष-मिथुन-कर्क-सिह-कन्या-तुला-वृश्चिक-धनु-मकर-कुंभ--मीनरूपा

राशयस्सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा

ॐ सूर्य-चंद्रागारक-बुध-गुरु-शुक्र-शनैश्चर-राहु-केतुरूपा ग्रहाः सुपूजिता प्रीता. शान्तिकरा भवन्तु स्वाहा.

ॐ इन्द्राग्नि-यम-निर्ऋति-वरुण-वायु-कुवेरेशान-नाग-ब्रह्मरूपा दिक्पाला. सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ गणेश-स्कन्द-क्षेत्रपाला देश-नगर-ग्रामदेवता सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा

ॐ अन्येऽपि क्षेत्रदेवा जलदेवा भूमिदेवाः सुपूजिताः सुप्रीताः भवन्तु स्वाहा. शान्तिं कुर्वन्तु स्वाहा

ॐ अन्याश्च पीठोपपीठक्षेत्रोपक्षेत्रवासिन्यो देव्यः सपरिकराः सबटुकाः सुपूजिताः सुप्रीता भवन्तु (स्वाहा) शान्तिं कुर्वन्तु स्वाहा.

ॐ सर्वेऽपि तपोधन-तपोधनी-श्रावक-श्राविकाभवाश्चतुर्णिकायदेवाः सुपूजिताः सुप्रीता भवन्तु, शान्तिं कुर्वन्तु स्वाहा.

ॐ अत्रैव देश-नगर-ग्राम-गृहेषु दोष-रोग-वैर-दौर्मनस्य-दारिद्र्य-मरक-वियोग-दुःख-कलहोपशमेन शान्तिर्भवतु. दुर्मनोभूत-प्रेत-पिशाच-यक्ष-राक्षस-वैताल-झोटिंक-शाकिनी-डाकिनी-तस्करातताथिनां प्रणाशेन शान्तिर्भवतु. भूकम्प-परिवेष-विद्युत्पातोल्कापात-क्षेत्र-देश-निर्घात-सर्वोत्पात-दोषशमनेन शान्तिर्भवतु. अकाल-फल-प्रसूति-वैकृत्य-पशुपक्षि-वैकृत्याकालदुश्चेष्टा-प्रमुखोपप्लवोपशमनेन शान्तिर्भवतु. ग्रहगणपीडित-राशिनक्षत्रपीडो-पशमनेन शान्तिर्भवतु. जांघिक-नैमित्तिकाकस्मिक-दुःशकुन-दुःस्वप्नोपशमनेन शान्तिर्भवतु. कृतक्रियमाण—पापक्षयेण शान्तिर्भवतु. दुर्जन—दुष्ट—दुर्भाषक—दुश्चिन्तक-दुराराध्य—शत्रूणां दुरापगमनेन शान्तिर्भवतु.

उन्मृष्ट-रिष्ट-दुष्ट-ग्रह-गति,-दुःस्वप्न-दुर्निमितादि; संपादित-हित-संपन्नामग्रहणं,

जयति शान्ते ॥१॥ या शान्तिः शान्तिजिने, गर्भगतेऽथाजनिष्ट वा जाते, सा शान्तिरत्र भूयात्, सर्वसुखोत्पादनाहेतुः ॥ २ ॥

अत्र च गृहे सर्वसपदागमनेन, सर्वसंतानवृद्ध्या, सर्वसमीहितवृद्ध्या, सर्वोपद्रवनाशेन मागल्योत्सवप्रमोद-कौतुक-विनोद-दानोद्भवेन शान्तिर्भवतु

भ्रातृ,-पत्नी,-मित्र,-संबंधिजन,-नित्य-प्रमोदेन शान्तिर्भवतु आचार्योपाध्याय,-तपोधन-तपोधना-श्रावक-श्राविकारूपसंघस्य शान्तिर्भवतु सेवक,-भृत्य-दास,द्विपद,-चतुष्पद,-परिकरस्य शान्तिर्भवतु अक्षीणकोशकोष्ठागारजलवाहनाना नृपाणा शान्तिर्भवतु

श्रीजनपदस्य शान्तिर्भवतु. श्रीजनपदमुख्याणा शान्तिर्भवतु श्रीसर्वाश्रमाणा शान्तिर्भवतु पुरमुख्याणा शान्तिर्भवतु. राजसन्निवेशाना शान्तिर्भवतु. धन,-धान्य-वस्त्र-हिरण्याना शान्तिर्भवतु ग्राम्याणां शान्तिर्भवतु क्षेत्रिकाणां शान्तिर्भवतु. क्षेत्राणा शान्तिर्भवतु

सुवृष्टाः सन्तु जलदाः, सुवाताः सन्तु वायवः ।
सुनिष्पन्नास्तु पृथिवी, सुस्थितोऽस्तु जनोऽखिलः ॥१॥

ॐ तुष्टि,-पुष्टि,-ऋद्धि,-वृद्धि,-सर्वसमीहितवृद्धिर्भूयात्.

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं, सर्वत्र सुखीभवन्तु लोकाः ॥१॥

सर्वेऽपि सन्तु सुखिनः, सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत् ॥ २ ॥

जगत्यां सन्ति ये जीवाः स्वस्वकर्मानुसारिणः ।
ते सर्वे वांछितं स्वं स्वं, प्राप्नुवन्तु सुखं शिवम् ॥ ३ ॥

इति शान्तिदंडकं जलधाराभिमन्त्रसहितं त्रिः पठेत् ततः शान्तिकलशजलेन

शान्तिककारयितार सपरिवारमभिषिंचेत् सर्वत्र गृहं ग्रामं च। दिक्पालादि सर्व-देवत-विसर्जनं यान्तु देव० इत्यादि उक्त्वा पूर्ववत् ॥ इति शान्तिकम् ॥

॥ अथ शान्तिक—फलम् ॥

सर्वत्र गृहिसंस्कारे, सूति-मृत्यु-विवर्जिते, प्रतिष्ठासु च सर्वासु, षण्मास्या वत्सरेऽथवा ॥१॥
आरब्धे च महाकार्ये, जातेऽप्युत्पातदर्शने, रोग-दोषे महाभीतौ, संकटोपगमेऽपि च ॥२॥
गतभूम्यादिलाभे च, महापापस्य संभवे। कारण्यं शान्तिक नूनं, धीमद्भिर्गृहमेधिभिः ॥३॥
दुरितानि क्षयं यान्ति, रोगदोषौ च शाम्यतः। दुष्टदेवासुरा मर्त्याः सपत्ना स्युः पराङ्मुखाः ॥४॥
सौमनस्यं शुभं श्रेयः, तुष्टिः पुष्टिर्विवर्धते। समीहितस्य सिद्धिःस्याच्छान्तिकस्यविधानतः ॥५॥

इति सामान्यशान्तिकफलं, शान्तिकान्ते साधुभ्यो विपुलवस्त्रपात्रभोजनोपकरणदानं दद्यात्. अत्र गृहे ( अस्मिन् जंबुद्वीपे० इत्यादि ) कथिते गृहाधिपस्य नामोच्चारं कुर्यात्. ( आचार-दिनकर पृ० २२० तः २२५ ) इति शान्तिककार्ये विशेष-पूजा-विधानम्।

# ત્રિકોણકુંડ રચના




ચોરસ ( ૨૪ આંગળ ) ક્ષેત્રફળના ૩ ભાગ કરવા. ( ૮ આંગળ ) એક ભાગ આગળ વધારવો. ( તૃતીયાંશ ૩૨ આંગળ, )ચોરસ (૨૪ આંગળ) ક્ષેત્રફળના ૪ ભાગ કરવા. તેમાંનો એક એક ભાગ ( ૬-૬ આંગળ ચતુર્થાંસ ) પડખે બે બાજુ વધારવો ( ૩૬ આંગલ ) અને ત્રિકોણ કરવું. ઇતિ.

પ્રકૃતિ 'ક્ષેત્ર' ૨૪ આંગળ, તેના આઠ ભાગ કરવા તેમાંથી '૫' ભાગ એટલે '૧૫' આંગળ જેટલું જમીનમાં ખોદવું જમીન ઉપર ઉંચાઇમાં ૯ આગળની ૩ મેખલા કરવી, (પ્રથમ એક આંગળ પુષ્પકંઠ કરવો.) ઉપરથી પહેલી મેખલા ૪ આંગળ ઉંચી અને ૪ આંગળ પહોળી કરવી. તે પછી મધ્યમાં બીજી મેખલા ૩ આંગળ ઉંચી, ૩ આંગળ પહોળી કરવી, ત્રીજી મેખલા નીચેની ૨ આંગળ ઉંચી અને ૨ આંગળ પહોળી બનાવવી. ॥ ઇતિ ॥

ચોની વ્યાસની અર્ધી. વ્યાસ ૨૪ આંગળ તેની અર્ધી-૧૨ આંગળ લાંબી કરવી, ૮ આંગળ પહોળી, ૧૨ આંગળ ઉંચી કરવી અને નીચેથી ભારી, ઉપર એક આંગળ સંકલિત અને જમીનના મૂળ સહિત છિદ્રની નાળ ૧૨

આગળ ઉંચી અને આગળના ભાગમા ૧ આગ નમતી, અદર એક આગળ કઠની બહાર કુડમા પ્રવેશ કરવાવાલી અને વચમા એક આગળ ખાતયુક્ત બનાવવી, માટીના ૨ ગોળા બને બાજુ પુષ્ઠ ઉપર રાખવા, એક આગળ પહોળી એક આગળ ઉચી તેની પરિધિ ચારે બાજુ રહે, આ સુન્દર પીપળાના પાનની આકૃતિ જેવી યોની બનાવવી ॥ ઇતિ॥

## શાન્તિકપૂજનની હવન સામગ્રી.

(૧) **પચ પરમેષ્ઠિ હોમમા**—ખાડ, ઘી દુધપાક ચદન અને સેત્રનના તથા ખીજડાના છોડીઆ (૨) **દશ દિક્પાલ હોમમા**—ઘી, મધ, ગોળ ગુગળ, દૂધપાક, શેરડીના કકડા, પીપળો અને વડના છોડીઆ (૩) **બાર રાશિ હોમમા**—દૂધ, ઘી, વડ અને બીલના છોડીઆ (૪) **નક્ષત્ર હોમમાં**—ઘી, મધ, ગુગુલફળ, પીપળા અને વડના છોડીઆ (૫) **નવગ્રહ હોમમા**—ઘી, મધ દૂધપાક, શેરડીના કકડા, કોહું, પીપળાના છોડીઆ (૬) **સોળ વિદ્યાદેવી હોમમા**—ઘી, ખાડ, દૂધપાક, શેરડીના કકડા, પીપળાના છોડીઆ (૭) **ગણુપતિ હોમમા**—લાડવા ચૂરમાના, ઉંબરના છોડીઆ (૮) **કાર્તિકેય હોમમાં**—ઘી, દૂધપાક, મહુડાના ફૂલ, પીપળાના છોડીઆ (૯) **ક્ષેત્રપાલ હોમમા**—તલના લાડવા, ધતુરાના છોડીઆ (૧૦) **પુરદેવતા હોમમા**—ઘી, ગોળ, શેરડીના કકડા, વડના છોડીઆ (૧૧) **ચાર નિકાયદેવ હોમમાં**—દૂધપાક, શેરડીના કકડા, જુદી જુદી જાતના ફૂલો, વડના, પીપલના છોડીઆ

ક્રિયાકારકે પોતાના હાથના ૨૪ આગળ પ્રમાણે ચોરસ કુડનુ માપ લેવુ, બીજા કુડોનુ માપ પણ પોતાના એક હાથ યાને ૨૪ આગળના પ્રમાણથી લેવું ૧૦૦ આહુતિથી માડીને ૧૦૦૦ આહુતિ સુધીમા ૨૪ આગળ પ્રમાણ ચોરસકુડ લેવો જોઇએ તેનાથી નાનો અગર મોટો ન લેવો જોઇએ

## બૃહત્સ્નાત્ર સામગ્રી

(૧) ત્રણ કુસુમાંજલિ. (૨) આઠ સ્નાત્ર- ૧ ક્ષીર, ૨ દધિ, ૩ ઘી, ૪ શેરડીનો રસ, ૫ જલ, ૬ સહસ્રમૂલ, ૭ શતમૂલ, ૮ સર્વૌષધિ. (૩) ધૂપ. (૪) શક્રસ્તવ, (૫) અભિષેકના ૧૯ કાવ્યો. (૬) છેલ્લું કાવ્ય બોલી ૧૦૮ અભિષેક કરવા.

૧ કસ્તૂરિકા વિલેપન. ૨ પુષ્પમાલા, ૩ આભૂષણ-મુગટ-હાર વગેરે. ૪ ફલઢૌકન, ૫ અક્ષતઢૌકન, ૬ જલકલશ ઢૌકન, ૭ ધૂપ, ૮ દીપ, ૯ ષટ્રસનૈવેદ્ય, ૧૦ સર્વધાન્યઢૌકન. ૧૧ સર્વવેસવાર ( સુંઠ, મરી, મઠ ), ૧૨ સર્વૌષધિ ઢૌકન, ૧૩ તાંબુલ ઢૌકન, ( તાંબુલ નંગ ૭ ) ૧૪ વસ્ત્ર પૂજા, ૧૫ સુવર્ણ રૌપ્ય-મુદ્રાપૂજન, ૧૬ કુસુમાંજલી પૂર્વક અષ્ટમંગલપૂજન ૧૭ પુષ્પમાલા જિનબિંબોપરિ સ્થાપન, ૧૮ આરતી, મંગલદીવો, આજ્ઞાહીનં૦ પુષ્પારોપણ, વિસર્જન.

## ॥ વિસર્જન વિધિ ॥

પીઠ વિસર્જન-પીઠ પાસે જઈને "યાન્તુ દેવગણાઃ સર્વે, પૂજામાદાય મામકીમ્; સિદ્ધિ દત્વા ચ મહતીં, પુનરાગમનાય ચ ॥૧॥" હાથ જોડીને આ વાક્ય દરેક પીઠ આગલ બોલવું. મંત્ર— ॐ વિસર વિસર સ્વસ્થાનં ગચ્છ ગચ્છ સ્વાહા" એમ બોલીને કુસુમાંજલિ પીઠ ઉપર નાખવી.

## अपराधक्षामणम्

कीर्तिं श्रियो राज्यपद सुरत्वं, न प्रार्थये किंचन देवदेव ।
मत्प्रार्थनीय भगवन् प्रदेयं, त्वद्दासता मा नय सर्वदापि ॥ १ ॥

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता ।
क्षमस्व त नाथ कुरु प्रसाद, प्रायो नराः स्युः प्रचुरप्रमादाः ॥ १ ॥

आज्ञाहीन क्रियाहीनं मंत्रहीन च यत्कृतम् ।
तत्सर्वं कृपया देवाः क्षमन्तु परमेश्वराः ॥ १ ॥

आह्वाहनं न जानामि न जानामि विसर्जनम् ।
पूजा चैव न जानामि त्वमेव शरण मम ॥ २ ॥

आशीर्वाद—श्लोकः—

सौभाग्यं भाग्यमग्र्यं किल विमलकुले संभवश्चापि संपत् , लक्ष्मीरारोग्यमंगे सखिसुतदयितावन्धुवर्गप्रवृद्धिः ।
सर्वस्तात् सारकल्पद्रुमजिनचरणेन्दीवरोयत्प्रसादात्, सौख्यं स्वर्गापवर्गप्रभवमपि जयो रम्यमैश्वर्यमाशु ॥ १ ॥

॥ इति श्री अर्हन्महापूजन-विधिः समाप्तः ॥

જાયફળ નગ ૫
ઈલાયચી શેર ૦।
સુંઠ શેર ૦।
કાળા મરી શેર ૦।
જીરાણુ શેર ૦।
આમળા નવટાંક
પીપી ,,
કંકોડી ,,
નાગરમોથ ,,
જાવંત્રી ,,
લીંડી પીપર ,,
મરજકંકોલના દાણા નગ ૨૧
રતાંજલીનું લાકડું તોલા ૧
અગરનું લાકડું તોલો ૨
કાળા તલ શેર ૦॥
તેલની શીશી ૧
ગોળ શેર ૭
બુરૂ ખાંડ શેર ૨
સાકર શેર ૨

અનાજની યાદી

અખંડ ચોખા મણ ૦॥।
૧ ઘઉં શેર ૨।
૨ જવ ,, ૧।

,, હીંના તો ૦॥
, કેવડો તો ૦॥

વિધિવાળા લાવશે.

(ઉજમફઈની ધર્મશાળેથી મળશે)

પીઠના પટ ન ૮ નીચે મુજબ

૧ પંચપરમેષ્ઠિ
૨ દશદિક્પાલ
૩ બાર રાશી
૪ અઠાવીસ નક્ષત્ર
૫ નવગ્રહ
૬ સોલ વિદ્યાદેવી
૭ પ્રકીર્ણ દેવોનો પટ
૮ અષ્ટમંગળ

ગંગાજળ–તીર્થજળ–૧૦૮ કુવાના પાણી
સીસમના બાજોઠ ન ૨
સાત દીવાની આરતી

પરચુરણ સામાન

બેઆ ન ૧૦૦
ચપ્પુ, કાતર, સુડી સૂયો, સોય ન ૨
દોરાનુ રીલ ૧
પીન ન ૫૦
ઝીણી ખીલીઓ શેર ૦॥
મોટી ખીલીઓ શેર ૦॥

નારંગી ,, ૩૧
સફરજન ,, ૧૨
દાડમ ,, ૨૪
સીતાફળ ,, ૨૪
કાચા ચીકુ ,, ૪૮
જામફળ ,, ૩૦
કાચા–પાકા કેળા ડઝન ૩
બાકી મોસમના ફળો
શેરડીના ૭ ઇંચના કકડા ૩૧
શેરડીના ૧॥ ઇંચના કકડા ૧૦૧
પાન નગ ૨૫૦

શાકની યાદી

કારેલા શેર ૧
સરગવાની સીંગ ,, ૧
કાકડી ,, ૧
ભીંડા ,, ૧
ટીંડોળા ,, ૧

નૈવેદ્યની યાદી

કંસાર લાડુ ન ૩૫
બારી પુરી ,, ૨૧
મગજ ,, ૩૧
મોહનથાળ ,, ૩૧
પેંડા ,, ૩૧
ઘેબર ,, ૧૧
ખાજા ,, ૨૧

૪ જુવાર ,, ૧ા

**અનાજની યાદી** (ચાલુ)

| | |
|---|---|
| ૫ મગ | શેર ૨ા |
| ૬ અડદ | ,, ૨ા |
| ૭ ચોળા | ,, ૧ા |
| ૮ કાંગ | ,, ૦ાા |
| ૯ વાલ | ,, ૧ા |
| ૧૦ વટાણા | ,, ૧ા |
| ૧૧ તાંદરાં | ,, ૧ા |
| ૧૨ ડાંગર | ,, ૨ા |
| ૧૩ કળથી | ,, ૦ાા |

ધાણી શેર ૦ા
મમરા શેર ૦ા
ચણાની દાળ શેર ૧
ઘઉંનો લોટ શેર ૫
ઘઉંના ફાડા ,, ૦ાા
મેંદાની સેવ ,, ૦ા
ચણાનો લોટ ,, ૧
ચોળાનો લોટ ,, ૦ાા
એરો ,, ૦ા
વડી ,, ૦ા

નાનુ રૂનુ બંડલ ૧
દીવાસળીની પેટી ૩
લાલ પેન્સીલ ૧
પુંઠા નં. ૫
પંખો નં. ૧ (હવન માટે)
પુંજણી ૧
વાળાકુંચી ૧
મોરપીંછ ૧
સાવરણી ૧
બેસવા માટે સંથારીયા નં
ગાલીચા નં. ૫
૬૫ નંબરના સુતરની આંટી ૧
**ઈન્દ્રોને પહેરવાના મુગટ નં. ૧૦**
**ઈન્દ્રોને બેસવાના સિંહાસન નં ૨**
પીસ્તાલીસ પનાનું પ્લાસ્ટીક વાર ૧૦

**કાપડની યાદી**

લાલ રેશમી વાર ૪ાા
ચંપઈ પીળું રેશમી વાર ૭૫ (૧૦×૨૫)
લીલું રેશમી વાર ૧ાા
સફેદ રેશમી વાર ૩૭
પાંચ પટો વાર ૪ાા
સોનેરી તાસ વાર ૦ા
મલમલ વાર ૫

[illegible] , ..
બરફી ,, ૩૧

ગ્રહ હવનના નૈવેદ્યના લાડવા

| | | | |
|---|---|---|---|
| ૧ ચોખાના | લાડુ | નંગ | ૬ |
| ૨ આખા મગના | ,, | ,, | ૬ |
| ૩ આખા અડદના | ,, | ,, | ૬ |
| ૪ કાળા તલના | ,, | ,, | ૮ |
| ૫ મમરાના | ,, | ,, | ૬ |
| ૬ ઘઉંના | ,, | ,, | ૪ |
| ૭ ચણાની દાળના | ,, | ,, | ૮ |
| ૮ ધાણીના | ,, | ,, | ૨ |
| ૯ ચુરમાના | , | ,, | ૧૫ |

(ગોળ ઘીનો પાગો કરી બનાવવા)

**રોકડ નાણું**

રોકડા રૂ. ૧૫૦
પાવલી રૂ. ૧૦
છુટા પૈસા રૂ. ૩
ગીની ૧
નોટો રૂ. ૨૫૦

**પહેલા દિવસની ફૂલ વિગેરેની યાદી**

ગુલાબ ૩૦૦
જાસુદ ૨૦૦
જાઈ જુઈ મોગરો શેર ૧

સારેવડા નંગ ૫
મરચુ – મીઠુ —હળદર
શે ૦। શે ૦॥ શે ૦।
ધાણાજીરૂ—રાઇ
શે ૦। શે ૦)॥
આખુ મીઠુ શેર ૧
ગાયનું ઘી „ ૧૫
ભેસનુ ઘી „ ૧૦
દશાંગ ધુપ „ ૨
અગરબત્તી શેર ૦॥
મોગરાની અગરબત્તી પેકેટ ૩
ભગીવાળી અગરબત્તી „ ૩
વાસક્ષેપ શેર ૦॥।
કપુર (મોટી ગોટી) તોલા ૩
કસ્તુરી વાલ ૨
અંબર વાલ „ ૨
ગોરૂચંદન „ ૨
કાચો હીંગલોક તોલો ૦॥
નુખ્ખડ શેર ૧
સફેદ સુતરની નોકારવાળી ૧
કેશર તોલા ૨॥

કસુંબો વાર ૪૦ (૪૫ પનાનો)
ધોતીયા નંગ ૪
ખેસ નંગ ૪
રૂમાલ નંગ ૨
પછીયા નંગ ૨
નેપકીન નંગ ૬

## ઝાડીયાની યાદી

દરેક જાતના છોડીયાના નાના કકડા કરાવી સુકી ગગડી જેવા બનાવવા

| | | | |
|---|---|---|---|
| બીલીના | છોડીયા | શેર | ૨ |
| ૧ સુખડના | „ | „ | ૫ |
| ૨ સેવન | „ | „ | ૨ |
| ૩ કોઠ | „ | „ | ૨ |
| ૪ સાગ | „ | „ | ૫ |
| ૫ પીપળો | „ | „ | ૩ |
| ૬ પીપળ | „ | „ | ૩ |
| ૭ સીસમ | „ | „ | ૨ |
| ૮ આસોપાલવ | „ | „ | ૨ |
| ૯ ઉમરાના | „ | „ | ૨ |
| ૧૦ ધતુરો | „ | „ | ૧ |
| ૧૧ આબાના | „ | „ | ૨ |
| ૧૨ વડ | „ | „ | ૩ |

લાલ સફેદ કરણ શેર ૦॥
ભગવત માટે ફુલના હાર ૭
ઇન્દ્રો માટે હાર નં ૪૦
આસોપાલવના તોરણ
ગાયનુ દુધ શેર ૨
ભેસનુ દુધ શેર ૨
દહીં શેર ૨ (મેળવેલુ)
પાન ૨૫

## બીજો દિવસ

ગુલાબ ૩૦૦
જાસુદ ૧૦૦
જાઇ જુઇ મોગરો શેર ૨
લાલ સફેદ પીળી કરણ શેર ૧
ડમરો (મરવો) શેર ૧
ચંપાના ફુલ ૧૫
ઇન્દ્રોના હાર ૪૦
આસોપાલવના તોરણ
દુધપાક મણ ૦॥।
દહીં શેર ૦૧
ગાયનું દુધ શેર ૨
પાન ૨૦૦

૬. સાત વિધાદેવો પાઠ પુજન ...

૭. પ્રદીર્ણ દેવોનું પીઠ પુજન સજોડે અથવા બે જણ

૮. હોમ આગળ બેસી ઉપરની પીઠમાં રહેલા દરેક દેવોને આહુતી આપવાની પુરુષ તથા દરેક દેવોને દુધપાકના પાત્ર આપવાનું પુરુષ.

૯. આરતી–મંગળ દીવો.

## ત્રીજા દિવસની ઉછામણીનું લીસ્ટ

૧. શ્રી શાતિનાથ ભગવંતના આઠ અભિષેક આઠ જણ ૧ દુધ, ૨ દહી, ૩ ઘી, ૪ શેરડીનો રસ, ૫ શુદ્ધ જળ,

...

૧૦ પુજનના બે દિવસ અગાઉ તમામ છોડ, ચંદરવા તથા ડેકોરેશન સુથારને રાખીને બનાવી લેવું. તથા કડીયાની પાસે હોમ માટે ત્રીકોણ કુંડ વિધિવાળાને પૂછી બનાવી લેવો અને પેઈન્ટર પાસે સરસ ચીત્રકામ કરાવી લેવું.

૧૧. લાઉડસ્પીકરની વ્યવસ્થા સારી રીતે કરવી.

૧૨. શ્રી અર્હંદ મહાપુજનમાં કોઇ પણ ભાઇ બેને કાળા કપડાં પહેરી આવવું નહીં.

સુચના:— ઉપર મુજબનું લીસ્ટ અર્હંત પૂજન ભણાવનાર તરફથી અમોને મલ્યું છે તે પ્રમાણે અમોએ છાપ્યું છે. ભણાવનાર ભાઇનું ઠેકાણું નીચે મુજબ છે.

**શા. ચીનુભાઇ લાલુભાઇ**
પતાસાની પોળ, ખારા કુવાની પોળ,
મુ. અમદાવાદ.

**શેઠ જસભાઈ લલ્લુભાઇ**
રતનપોળ, શેઠની પોળ,
મુ. અમદાવાદ.

આ પી પ્રેસ–પાલીતાણા.

## ત્રીજે દિવસ

ગુલાબ ૨૦૦
જાસુદ ૧૦૦
જાઇ જુઇ મોગરો શેર ૧
ભગવત માટે હાર ૫
ઇન્દ્રોના હાર ૩૦
આસોપાલવના તોરણ
ગાયનું દૂધ શેર ૧૦
ભેસનુ દૂધ શેર ૭
દહીં શેર ૫
શેરડીનો રસ શેર ૫
પાંચ જાતના શાક
પાન ૨૫
વાઢી ન. ૧
તીગડા સાથે સિંહાસન જોડ ૨
પરનારવાળો બાજોઠ ન ૨
ચાદીના છત્ર ન ૨
પાણી જવા માટે ભુગળી

૧૦૮ નાળચાનો કળશ ૧

### વાસણ વગેરેની યાદી

પાષાણના શ્રી આદીશ્વર ભગવંત
ધાતુના પંચતીર્થીશ્રી શાતિનાથ ભગવત
શ્રી સિદ્ધચક્રજી ૨
નવગ્રહ પાટલો ૧
દશદિગ્પાલ પાટલો ૧
અષ્ટમંગળ પાટલો ૧
સમચોરસ બાજોઠ ન ૮
(૭૪ ઇંચથી ૩૬ ઇંચનો સમચોરસ)
અષ્ટમંગળ પાટલો ૧
અખંડ દીવા માટે મોટુ ફાનસ તથા
ઝીસરાણુ મોટુ કોડીયું ૧ (તાંબાનુ)
ચંદરવા, પુઠીયા, તોરણ જોડ ૬
૧૦૮ દીવાની આરતી
મંગળ દીવો
ચાદીના કળશ ૮
વૃષભના કળશ ૨

બેઠા ઘાટના લોટા નગ ૪
જર્મનના થાળ મોટા ૨૫
જર્મનના થાળ નાના ૪૦
જર્મનના વાટકા ૧૫
જર્મનની સેવા કરવાની રકાબી ૨૫
જર્મનની મેવા કરવાની વાડકી ૨૫
શાતિનાથ ભગવત માટે મુકુટ, પાખર તથા હાર કરાવવા
ચાદીના લોટા ૨

### રસોઈના વાસણો

થાળીઓ નગ ૧૫
વાડકા નગ ૧૫
નાની મોટી તપેલી ઢાકણા સાથે નગ ૧૦
ડોલ ૧
દેગડો ૨ ખારણી પરા
ચમચા ૪
તાવેથો ૧
ઝારો ૧

अन्तर्गत नंद्य'वर्त्तमहापूजन, ( बृहत्स्नात्र विधि ) अर्हद्महापूजन शान्तिकविधान और अर्हन्महापूजन पौष्टिकविधान हैं, उपर्युक्त महापूजनानन्तर्गत पच्चीस कुसुमांजलियें भी सम्मिलित हैं, जो न केवल प्रभुके प्रति भक्तकी भव्यभावना ही अभिव्यक्त करती है, अपितु, उनका काव्यत्व सौष्ठव भी मनोहरी है, श्रवण मात्रसे हृदयतंत्रीके तार झंकृत हो उठते हैं, आत्म-विभोर होकर मानव अहं और दर्पवृत्तिका त्याग कर देता है, इन्हो कुसुमांजलिके सुश्राव्य काव्यों पर विद्वद्वरेण्य आचार्य महाराज श्री धर्मधुरंधरसूरिजीने पाण्डित्यपूर्ण वृत्ति निर्मित कर लोकभोग्य बनानेका श्लाध्य प्रयत्न किया है.

परमपूज्य गुरुवर्य स्व. उ० सुखसागरजी महाराज सा. की आन्तरिक इच्छा थी कि इस रचना का प्रकाशन नितान्त वांछनीय है, विधिका विधान है कि आज पूज्यवर प्रकाशित कृतिको देखनेके लिए इस लोकमें नहीं हैं,

प्रान्तमें बम्बई ( पायधुनी ) के महावीरस्वामी मंदिरके ज्ञानप्रेमी ट्रस्टीओंको धन्यवाद देना आवश्यक है कि उनने इसके महत्वको समझ कर प्रकाशनार्थ अर्थ व्यय करना स्वीकार किया, क्रियाकारकोंसे निवेदन है कि यदि इसमें कोई स्खलना दृष्टिगत हो तो सम्पादकोंको सूचित करनेका कष्ट करें.

सोनबाई बिल्डीग, वि. सं. २०२५ फाल्गुन सुदि १३
मु० पालीताणा ( सौ. )

मुनि मंगलसागर, मुनि कान्तिसागर

॥ श्री स्तम्भनपार्श्वनाथाय नम. ॥

श्री खरतरगच्छालंकार-वर्धमानसूरि-विरचित-आचारदिनकरग्रन्थान्तर्गत-

श्री शान्तिकाधिकारनाम-चतुस्त्रिंशत्तम-उदयानुसारेण-

# श्री-अर्हन्महापूजन-विधिः ॥

[ अपरनाम- श्री शान्तिकमहापूजनविधिः ]

अथ शान्तिकाधिकारविधिः ॥ तत्रादौ गुरुर्गृहिगुरुर्वा सुस्नातः कङ्कणमुद्राङ्कितकरः सदशाव्यङ्गश्वेतवस्त्रधरो भवेत् । शान्तिककारोऽपि तादृग्वेषभूषणधारी सभ्रातृपुत्रो भवेत् । गीतनृत्यवाद्यादिनारीमङ्गलगायनाचार प्रगुणीकुर्यात् । ततो बृहत्स्नात्रविधिनारभेत ।

जिनार्चनविधिरर्हत्कल्पकथनानुसारेण प्रोच्यते । स यथा-

श्राद्धः केवलदृढसम्यक्त्वधारी प्राप्तगुरूपदेशः सर्वांगसुस्नातः बद्धधम्मिलः शुचिपरिधानः कृतोत्तरासगः स्ववर्णानुसारेण (स्वलक्ष्म्यनुसारेण) जिनोपवीतोत्तरीयोत्तरासगभृत् कृतमुखकोशोऽनन्यचित्तो जिनालये चैत्ये वा एकान्ते जिनार्चन कुर्यात् ।

ॐ नमो लोए सव्वसाहूणं, मोचके पादयोः शुभे । एसो पंचनमुक्कारो, शिला वज्रमयी तले ॥ ४ ॥
सव्वपावप्पणासणो, वप्रो वज्रमयो बहिः । मंगलाणं च सव्वेसिं, खादिरांगारखातिका ॥ ५ ॥
स्वाहांतं च पदं ज्ञेयं, पढमं हवइ मंगलं । वप्रोपरि वज्रमयं, पिधानं देहरक्षणे ॥ ६ ॥
महाप्रभावा रक्षेयं, क्षुद्रोपद्रवनाशिनी । परमेष्ठिपदोद्भूता, कथिता पूर्वसूरिभिः ॥ ७ ॥
यश्चैनां कुरुते रक्षां, परमेष्ठिपदैः सदा । तस्य न स्याद् भयं व्याधि–राधिश्चापि कदाचन ॥ ८ ॥

क्षि प ॐ स्वा हा हा स्वा ॐ प क्षि इत्यक्षरैर्यथाक्रमं पादांगुष्ठाग्रजानुसन्धि–हृदयमुखभालांतान्यारोहावरोहाभ्यां मध्यांगुलिद्वयाग्राभ्यां स्पृशन् आत्मरक्षां करोति ॥ एवं वज्रपञ्जरकवचादिमन्त्रेण शरीररक्षामात्मरक्षां च प्रथमं विदध्यात् । तदनु च जलपुष्पपत्राक्षतफलधूपवह्निदीपगन्धादीनां सर्वेषां पूजोपकरणानां निरवद्यताकरणम् ॥ तन्मन्त्राश्चेमे-जलमन्त्रः-

ॐ आपोऽप्काया एकेन्द्रिया जीवा निरवद्यार्हत्पूजायां निर्व्यथाः सन्तु निरपायाः सन्तु सद्गतयः सन्तु न मेऽस्तु संघट्टनहिंसापापमर्हदर्चने स्वाहा ॥ इति जलाभिमन्त्रणम् ।

अथ पत्रपुष्पफलधूपचन्दनादिमन्त्रः—

ॐ वनस्पतयो वनस्पतिकाया जीवा एकेन्द्रिया निरवद्यार्हत्पूजायां निर्व्यथाः सन्तु निरपायाः सन्तु सद्गतयः सन्तु न मेऽस्तु संघट्टनहिंसापापमर्हदर्चने स्वाहा ॥ इति पत्रपुष्पफलचन्दनधूपाद्यभिमन्त्रणम् ।

## ॥ जिनार्चनविधिः ॥

प्रथम स्नात्रपीठे श्रीशान्तिनाथप्रतिमा स्थापयेत्। तत्प्रतिमाया अलाभेऽन्यजिनप्रतिमायामपि निश्चयेन श्री शान्तिनाथप्रतिमा कल्पयेत् तन्मन्त्रो यथा—

ॐ नमोऽर्हद्भ्यस्तीर्थकरेभ्य. श्रीशान्तिनाथेभ्यो जिनेभ्योऽनाद्यन्तेभ्यः समनलेभ्यः समकृत्येभ्यः समप्रभावेभ्यः समकेवलेभ्यः समतत्त्वोपदेशेभ्यः समपूजनेभ्यः समकल्पनेभ्यः श्रीशान्तिनाथभगवान् (सममस्त्वत्र तीर्थकरनाम) पञ्चदशकर्मभूमिभवस्तीर्थकरो योऽत्राराध्यते सोऽत्र प्रतिमाया सन्निहितोऽस्तु स्वाहा ॐ ह्रीं ठः ठः ठः स्वाहाः ॥ अनेन मन्त्रेण जिनप्रतिमाया यस्य तीर्थकरस्य कल्पना निधीयते स तीर्थकरः प्रतिमाया पूजितो भवति ॥ अत एव वासक्षेपेण अन्यप्रतिमाया शान्तिजिनकल्पना ॥ तदनन्तरं पूर्वमर्हत्कल्पविधिना पूर्णां जिनार्चनपूजा विदध्यात् ॥

## ॥ वज्रपञ्जरस्तोत्रम् ॥

ॐ परमेष्ठिनमस्कार, सार नवपदात्मकम्। आत्मरक्षाकर वज्र—पञ्जराभ स्मराम्यहम् ॥ १ ॥
ॐ नमो अरिहताण, शिरस्क शिरसि स्थितम्। ॐ नमो सव्वसिद्धाण, मुखे मुखपट वरम् ॥ २ ॥
ॐ नमो आयरियाण, अगरक्षातिशायिनी। ॐ नमो उवज्झायाण, आयुध हस्तयोर्दृढम् ॥ ३ ॥

॥ श्री स्तम्भनपार्श्वनाथाय नमः ॥

श्री खरतरगच्छालंकार-वर्धमानसूरि-विरचित-आचारदिनकरग्रन्थान्तर्गत-

श्री शान्तिकाधिकारनाम-चतुस्त्रिंशत्तम-उदयानुसारेण-

# श्री-अर्हन्महापूजन-विधिः ॥

[ अपरनाम- श्री शान्तिकमहापूजनविधिः ]

अथ शान्तिकाधिकारविधिः ॥ तत्रादौ गुरुर्गृह्यगुरुर्वा सुस्नातः कङ्कणमुद्राङ्कितकरः सदशाव्यङ्गश्वेतवस्त्रधरो भवेत् । शान्तिककारोऽपि तादृग्वेषभूषणधारी सभ्रातृपुत्रो भवेत् । गीतनृत्यवाद्यादिनारीमङ्गलगायनाचारं प्रगुणीकुर्यात् । ततो बृहत्स्नात्रविधिनारभेत ।

जिनार्चनविधिरर्हत्कल्पकथनानुसारेण प्रोच्यते । स यथा-

श्राद्धः केवलदृढसम्यक्त्वधारी प्राप्तगुरूपदेशः सर्वांगसुस्नातः बद्धधम्मिलः शुचिपरिधानः कृतोत्तरासंगः स्ववर्णानुसारेण ( स्वलक्ष्म्यनुसारेण ) जिनोपवीतोत्तरीयोत्तरासंगभृत् कृतमुखकोशोऽनन्यचित्तो जिनालये चैत्ये वा एकान्ते जिनार्चनं कुर्यात् ।

ततः— शिवमस्तु सर्वजगतः, परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं, सर्वत्र सुखीभवन्तु लोकाः ॥ १ ॥ (आर्या)
सर्वेऽपि सन्तु सुखिनः, सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत् ॥ २ ॥ (अनुष्टुप्)

भूशुद्धिमन्त्रः— ॐ भूतधात्री पवित्रास्तु, अधिवासितास्तु, सुप्रोक्षितास्तु, स्वाहा ॥
इति जलेन पूर्वलिप्तभूमौ प्रोक्षणम् ॥

ततः पीठमन्त्रः— ॐ स्थिराय शाश्वताय निश्चलाय पीठाय नमः स्वाहा ॥
इति प्रक्षालित–चन्दनलिप्त,–स्वस्तिकाकित–पूजापट्टस्थालादिस्थापनम् ॥
चैत्ये तु स्थिरबिम्बे एताभ्या मन्त्राभ्यां तद्भूमिजलपट्टाद्यधिवासनम् ॥ ततः—

ॐ अत्र क्षेत्रे अत्र काले नामार्हन्तो रूपार्हन्तो द्रव्यार्हन्तो भावार्हन्तः समागताः सुस्थिताः सुनिष्ठिताः सुप्रतिष्ठाः सन्तु स्वाहा ॥

इत्यर्हत्प्रतिमास्थापनम् । निश्चलबिम्बे चरणाधिवासनम् । ततोऽञ्जल्यग्रे पुष्पं गृहीत्वा पुष्पाभिषेकमन्त्रः—

ॐ नमोऽर्हद्भ्यः सिद्धेभ्यस्तीर्णेभ्यस्तारकेभ्यो बोधकेभ्यः सर्वजन्तुहितेभ्य इह कल्पनाबिम्बे भगवन्तोऽर्हन्तः

सुप्रतिष्ठिताः सन्तु स्वाहा ॥ इति मौनेन कथयित्वा भगवच्चरणोपरि पुष्पस्थापनम् ॥

पुनरपि पुष्पेण जलार्द्रितेन पूजापूर्वकं कथनं यथा— स्वागतमस्तु सुस्थितिरस्तु सुप्रतिष्ठास्तु स्वाहा ॥

ततः पुष्पाभिषेकेण—अर्घ्यमस्तु पाद्यमस्तु आचमनीयमस्तु सर्वोपचारैः पूजास्तु स्वाहा ॥

एभिर्वचनैः पुनर्जिनप्रतिमोपरि जलार्द्रितपुष्पारोपणं विधीयते ॥ ततो जलं गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं वं— जीवनं तर्पणं हृद्यं, प्राणदं मलनाशनम् ।
जलं जिनार्चनेऽत्रैव, जायतां सुखहेतवे ॥ १ ॥ स्वाहा ॥

इति जलेन प्रतिमाभिषेचनम् । स्नपनं च । ततश्चन्दनकुंकुमकर्पूरकस्तूरीप्रमुखगन्धं करे गृहीत्वा मन्त्रश्लोकः ।
यक्षकर्दमपूजा—

ॐ अर्हं लं— दं गन्धं महामोदं, बृंहणं प्रीणनं सदा ।
जिनार्चनेऽत्र सत्कर्म-संसिद्ध्यै जायतां मम ॥ १ ॥ स्वाहा ॥

इति विविधगन्धैः प्रतिमाविलेपनम् ॥ ततः पुष्पपत्रिकादि हस्ते गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं क्षं— नानावर्णं महामोद, सर्वत्रिदशवल्लभम् ।
जिनार्चनेऽत्र संसिद्ध्यै, पुष्पं भवतु मे सदा ॥ १ ॥ स्वाहा ॥

इति पुष्पपूजा । ततोऽक्षतान् गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं त— प्रीणन निर्मलं वल्यं, माङ्गल्यं सर्वसिद्धिदम् ।
जीवन कार्यससिद्ध्यै, भूयान्मे जिनपूजने ॥ १ ॥ स्वाहा ॥

इत्यक्षतान् जिनप्रतिमोपरि आरोपयेत् ॥ ततः पूगजातिफलानि वर्त्तमानर्तुफलं करे गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं फुः— जन्मफल स्वर्गफल, पुण्यमोक्षफल फलम् ।
दद्याज्जिनार्चनेऽत्रैव, जिनपादाग्रसंस्थितम् ॥ १ ॥ स्वाहा ॥

इति जिनाग्रे फलपूजा ॥ ततो धूप गृहीत्वा श्लोकः—

ॐ अर्हं र— श्रीखण्डागरुकस्तूरी–द्रुमनिर्याससम्भवः ।
प्रीणनं सर्वदेवाना, धूपोऽस्तु जिनपूजने ॥ १ ॥ स्वाहा ॥

इति वह्नौ धूपक्षेपः ॥ ततः पुष्प गृहीत्वा मन्त्रश्लोकः—

ॐ अर्हं रं— पञ्चज्ञानमहाज्योति-र्मयोऽयं ध्वान्तघातने ।

द्योतनाय प्रतिमाया, दीपो भूयात्सदार्हतः ॥ १ ॥ स्वाहा ॥

इति दीपमध्ये पुष्पन्यासः । ततः पुष्पाणि गृहीत्वा मन्त्रः—

ॐ अर्हं भगवद्भ्योऽर्हद्भ्यो जल—गन्ध—पुष्पाक्षत—फल—धूप—दीपैः संप्रदानमस्तु, ॐ पुण्याहं पुण्याहं, प्रीयन्तां प्रीयन्तां भगवन्तोऽर्हन्तस्त्रिलोकस्थिता, नामाकृति—द्रव्य—भावयुताः स्वाहा ॥ इति जिनपूजनम् ॥

ततो वासान् गृहीत्वा मन्त्रो यथा—

ॐ सूर्य-सोमाङ्गारक-बुध-गुरु-शुक्र-शनैश्चर-राहु-केतुमुखा ग्रहा इह जिनपादाग्रे समायान्तु पूजां प्रतीच्छन्तु स्वाहा ॥

इत्युक्त्वा जिनपादाधः स्थापितग्रहेषु स्नानपट्टे वा वासान् निक्षिपेत् ॥ ततः—

आचमनमस्तु स्वाहा । गन्धमस्तु स्वाहा । पुष्पमस्तु स्वाहा । अक्षतमस्तु स्वाहा । फलमस्तु स्वाहा । धूपोऽस्तु स्वाहा । दीपोऽस्तु स्वाहा । इति क्रमेण जल—गन्ध—पुष्पाक्षत—फल—धूप—दीपैर्ग्रहाणां पूजा ॥

ततोऽञ्जल्यग्रे पुष्प गृहीत्वा मन्त्रः—

ॐ सूर्य—सोमाङ्गारक—बुध—गुरु—शुक्र—शनैश्चर—राहु—केतुमुखा ग्रहाः सुपूजिताः सन्तु, सानुग्रहाः सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु, माङ्गल्यदाः सन्तु, महोत्सवदाः सन्तु, स्वाहा ॥ इति ग्रहेषु पुष्पारोपणम् ।

पुनरनयैव रीत्या मन्त्रः—

ॐ इन्द्राग्नि-यम-निर्ऋति-वरुण-वायु-कुबेरेशान-नागब्रह्माणो लोकपालाः सविनायकाः सक्षेत्रपाला इह जिन-पादाग्रे समागच्छन्तु पूजा प्रतीच्छन्तु स्वाहा ॥ इति पूजापट्टोपरि लोकपालाना वासक्षेपः ॥ ततः—

आचमनमस्तु स्वाहा । गन्धमस्तु स्वाहा । पुष्पमस्तु स्वाहा । अक्षतमस्तु स्वाहा । फलमस्तु स्वाहा । धूपोऽस्तु स्वाहा । दीपोऽस्तु स्वाहा । इति क्रमेण जल—गन्ध—पुष्पाक्षत—फल—धूपैर्लोकपालाना पूजा ॥ ततोऽञ्जल्यग्रे पुष्पं गृहीत्वा मन्त्रः—

ॐ इन्द्राग्नि—यम—निर्ऋति—वरुण—वायु—कुबेरेशान—नाग—ब्रह्माणो लोकपालाः सविनायकाः सक्षेत्रपालाः सुपूजिताः सन्तु, सानुग्रहाः सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु, माङ्गल्यदाः सन्तु, महोत्सवदाः सन्तु, स्वाहा ॥ इति लोकपालेषु पुष्पारोपणम् । ततः पुष्पाञ्जलिं गृहीत्वा मन्त्रो यथा—

ॐ अस्मत्पूर्वजा गोत्रसभवा देवगतिगताः सुपूजिताः सन्तु सानुग्रहाः सन्तु तुष्टिदाः सन्तु पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु महोत्सवदाः सन्तु स्वाहा ॥ इति जिनपादाग्रे पुष्पाञ्जलिं क्षिपेत् । ततः पुनः पुष्पाञ्जलिं गृहीत्वा मन्त्रः—

ॐ अर्हं अर्हद्भक्ताष्टनवत्युत्तरशत (१९८) देवजातयः सदेव्यः पूजा प्रतीच्छन्तु, सुपूजिताः सन्तु, सानुग्रहाः

सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु, माङ्गल्यदाः सन्तु, महोत्सवदाः सन्तु, स्वाहा ॥ इति जिनपादाग्रे पुष्पाञ्जलिं क्षिपेत् ।

ततोऽञ्जल्यग्रे पुष्पं धृत्वा अर्हन्मन्त्रं स्मृत्वा तेन पुष्पेण जिनप्रतिमां पूजयेत् । अर्हन्मन्त्रो यथा—

" ॐ अर्हं नमो अरिहंताणं, ॐ अर्हं नमो सयंसंबुद्धाणं, ॐ अर्हं नमो पारगयाणं स्वाहा " ॥

अयं तु त्रिपदो मन्त्रः, श्रीमतामर्हतां परः । भोगमोक्षप्रदो नित्यं, सर्वपापनिकृन्तनः ॥ १ ॥
न स्मर्तव्योऽपवित्रैश्च, नान्यचित्तैर्न सस्वरम् । न श्राव्यश्च नास्तिकानां, नैव मिथ्यादृशामपि ॥ २ ॥

ततोऽष्टोत्तरशतं तदर्धं वा मन्त्रजापः । ( १०८ अथवा ५४ मन्त्रजापः कार्यः )

ततो नैवेद्यढौकनं पात्रद्वयेन ( षड्रसभोजनस्थालः ) । तत एकपात्रजलं चुलुके गृहीत्वा मन्त्रः—

ॐ अर्हं— नानाषड्रससंपूर्णं, नैवेद्यं सर्वमुत्तमम् ।
जिनाग्रे ढौकितं सर्व—सम्पदे मम जायताम् ॥ १ ॥

प्रत्येकं तत्र नैवेद्ये जलचुलुकक्षेपः । पुनर्जलचुलुकं गृहीत्वा मन्त्रो यथा—

ॐ सर्वे गणेशक्षेत्रपालाद्याः सर्वे दिक्पालाः सर्वेऽस्मत्पूर्वजोद्भवा देवाः सर्वेऽष्टनवत्युत्तरशतं देवजातयः सदेव्योऽर्हद्भक्ता अनेन नैवेद्येन संतर्पिताः सन्तु, सानुग्रहाः सन्तु, तुष्टिदाः सन्तु, पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु,

महोत्सवदाः सन्तु स्वाहा ॥ इति द्वितीयनैवेद्यस्योपरि चुलुकक्षेपः ॥ इति जिनार्चनविधिः ॥ 卐

ततः पुष्पाञ्जलिं गृहीत्वा—

योऽ जन्मकाले, पुरुषोत्तमस्य, सुमेरुशृङ्गे कृतमज्जनैश्च ।
देवैः प्रदत्त. कुसुमाञ्जलिः स, ददातु सर्वाणि समीहितानि ॥ १ ॥

पुष्पाञ्जलिक्षेपः ॥ ततः द्वि० कु० ॥

राज्याभिषेकसमये त्रिदशाधिपेन, छत्रध्वजाङ्कतलयोः पदयोर्जिनस्य ।
क्षिप्तोऽतिभक्तिभरतः कुसुमाञ्जलिर्यः, स प्रीणयत्वनुदिन सुधिया मनासि ॥ २ ॥

द्वितीयकुसु० ॥ ततः तृतीयकुसु० ॥

देवेन्द्रैः कृतकेवले जिनपतौ सानन्दभक्त्यागतैः संदेहव्यपरोपणक्षमशुभव्याख्यानबुद्धाशयैः ।
आमोदान्वितपारिजातकुसुमैर्यत्स्वामिपादाग्रतो, मुक्तः स प्रतनोतु चिन्मयहृदा भद्राणि पुष्पाञ्जलिः ॥३॥

तृतीयकुसुमाञ्जलिक्षेपः ॥ इति वृत्तत्रयेण पुष्पाञ्जलित्रयक्षेपः ॥ ततो लवण गृहीत्वा—

---

卐 प्रथमदिनमध्याह्ने द्वितीयदिने तृतीयदिने च क्रियाविधिकरणात् पूर्वं पृष्ठ १ त पृष्ठ ८ ॥ इति जिनार्चन विधि ॥ तत्पर्यंत विधि विधाय तत्पश्चाद् अग्रेतनक्रियाविधि करणीय ।

लावण्यपुण्याङ्गभृतोऽर्हतो य–स्तद्दृष्टिभावं सहसैव धत्ते ।
स विश्वभर्तुर्लवणावतारो, गर्भावतारं सुधियां विहन्तु ॥ १ ॥

इति जिनस्य लवणोत्तारणम् ॥ ततः पुनरपि लवणं० ॥

लावण्यैकनिधेर्विश्व–भर्तुस्तद्वृद्धिहेतुकृत् । लवणोत्तारणं कुर्याद्, भवसागरतारणम् ॥ २ ॥

इति द्वि० लवणोत्तारणम् । इति वृत्तद्वयेन द्विवेलं लवणोत्तारणम् । ततो लवणमिश्रं जलं गृहीत्वा वृत्तम्–

सक्षारतां सदासक्तां, निहन्तुमिव सोद्यमः । लवणाब्धिलवणाम्बु–मिषात्ते सेवते पदौ ॥ १ ॥

इति लवणमिश्रपानीयोत्तारणम् । ततः शुद्धं जलं गृहीत्वा वृत्तम्–

भुवनजनपवित्रताप्रमोद–प्रणयनजीवनकारणं गरीयः ।
जलमविकलमस्तु तीर्थनाथ–क्रमसंस्पर्शि सुखावहं जनानाम् ॥ १ ॥

इति जिनचरणयोः शुद्धजलप्रक्षेपः । ततः सप्तवर्तिकावदारात्रिकावतारणवृत्तम्–

सप्तभीतिविघातार्हं, सप्तव्यसननाशकृत् । यत्सप्तनरकद्वार–सप्तारितुलां गतम् ॥ १ ॥

सप्ताङ्गराज्यफलदानकृतप्रमोदं, तत्सप्ततत्त्वविदनन्तकृतप्रबोधम् ।
तच्छक्रहस्तधृतसंगतसप्तदीप–मारात्रिकं भवतु सप्तमसद्गुणाय ॥ २ ॥

ततो मङ्गलप्रदीपावतारणवृत्तानि यथा—

विश्वत्रयभवैर्जीवैः, सदेवासुरमानवैः । चिन्मङ्गलं श्रीजिनेन्द्रात्, प्रार्थनीयं दिने दिने ॥ १ ॥

यन्मङ्गल भगवतः परमार्हतः श्री—सयोजने प्रतिनभूव विवाहकाले ।
सर्वासुरासुरवधूमुखगीयमानं, सप्तर्पिभिश्च सुमनोभिरुदीर्यमाणम् ॥ २ ॥

दास्य गतेषु सकलेषु सुरासुरेषु, राज्येऽर्हतः प्रथमसृष्टिकृतो यदासीत् ।
सन्मङ्गल मिथुनपाणिगतीर्थनारि, पादाभिषेकविधिना न्युपचीयमानम् ॥ ३ ॥

यद्विश्वाधिपतेः समस्ततनुभृत्ससारनिस्तारणे.
तीर्थे पुष्टिमुपेयुषि प्रतिदिन वृद्धिं गतं मङ्गलम् ।
तत्सप्रत्युपनीतपूजनविधौ विश्वात्मनामर्हता,
भूयान्मङ्गलमक्षयं च जगते स्वस्त्यस्तु संघाय च ॥ ४ ॥

इति धृत्तचतुष्टयेन मङ्गलदीपोल्लासः ॥ ततः शक्रस्तवपाठः (नमुत्थुण०) ॥

॥ इति जिनार्चनविधिः ॥ (आचारदिनकर पृ ५८—६१)

अथ कश्चनापि श्राद्धो निर्भरार्हद्भक्तिः नित्यं पर्वणि कार्यान्तरे वा जिनस्नात्रं ( लघुस्नात्रं ) चिकीर्षति तस्य चायं विधिः ॥

पूर्वस्नात्रपीठे पूर्वोक्तप्रकारेण दिक्पालग्रहान्यदेवतापूजनवर्जितेन जिनप्रतिमां संपूज्य तथाऽऽरात्रिकं विधाय मंगलदीपवर्जितं श्राद्धः पूर्वोपचारयुक्तो गुरुसमक्षं चतुर्विधे श्रीसंघे मीलिते चतुर्विधे गीतवाद्याद्युत्सवे पुष्पाञ्जलिं करे गृहीत्वा 'नमो अरिहंताणं, नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः' उक्त्वा वृत्तद्वयं शार्दूलमालिनीरूपं पठेत्—

कल्याणं कुलवृद्धिकारिकुशलश्लाघार्हमत्यद्भुतं, सर्वाघप्रतिघातनं गुणगणालंकारविभ्राजितम् ।
कान्तिश्रीपरिरंभणप्रतिनिधिप्रख्यं जगत्यर्हतां, ध्यानं दानवमानवैर्विरचितं सर्वार्थसंसिद्धये ॥१॥

भुवनभवनपापध्वान्तदीपायमानं, परमतपरिघातप्रत्यनीकायमानम् ।
धृतिकुवलयनेत्रावश्यमंत्रायमाणं, जयति जिनपतीनां ध्यानमभ्युत्तमानाम् ॥२॥

इति पुष्पाञ्जलिक्षेपः ततो धूपं गृहीत्वा वृत्तम्— ( उपजातिः )

कर्पूरसिल्हाधिककाकतुंड—कस्तूरिकाचंदननंदनीयः ।
धूपो जिनाधीश्वरपूजनेऽत्र, सर्वाणि पापानि दहत्वजस्रम् ॥१॥

अनेन वृत्तेन सर्वपुष्पाञ्जल्यन्तरे धूपोत्क्षेपः शक्रस्तवपाठश्च । ततो जलकलशं गृहीत्वा श्लोक—वसन्ततिलके पठेत्—

केवली भगवानेकः स्याद्वादी मंडनैर्विना । विनापि परिवारेण वन्द्यते प्रभुतोर्जितः ॥ १ ॥

तस्येशितुः प्रतिनिधिः सहजश्रियाढ्यः पुष्पैर्विनापि हि विना वसनप्रतानैः ।
गन्धैर्विना मणिमयाभरणैर्विनापि लोकोत्तर किमपि दृष्टिसुखं ददाति ॥ २ ॥

इति प्रतिमायाः कलशाभिषेकः । ततः पुष्पालङ्कारादीनामवतारणं, ततः पुनः पुष्पाञ्जलिं गृहीत्वा वृत्तद्वयम्—

विश्वानदकरी भवाम्बुधितरी सर्वापदा कर्त्तरी, मोक्षाध्वैकविलङ्घनाय विमला विद्या पर खेचरी ।
दृग्वृष्युद्भावितकल्मषापनयने बद्धप्रतिज्ञा दृढ, रम्यार्हत्प्रतिमा तनोतु भविना सर्वं मनोवाञ्छितम् ॥१॥

परमतरसमागमोत्थ–प्रसृमरहर्षविभासिसन्निकर्षा ।
जयति जगदिनस्य शस्यदीप्तिः प्रतिमा कामितदायिनी जनानाम् ॥ २ ॥

पुष्पाञ्जलिक्षेपः । पूर्वोक्तवृत्तेन (कर्पूर०) धूपोत्क्षेपः शक्रस्तवश्च । पुनः पुष्पाञ्जलिं गृहीत्वा वृत्तद्वयम्—

न दुःखमतिगात्रकं न विपदा परिस्फूर्जित, न चापि यशसा क्षतिर्न विषमा नृणा दुःस्थता ।
न चापि गुणहीनता न परमप्रमोदक्षयो, जिनार्चनकृतां भवे भवति चैव निःसंशयम् ॥ १ ॥

एतत्तत्त्व परममसमानन्दसंपन्निदानं, पातालौकः सुरनररहित साधुभि प्रार्थनीयम् ।
सर्वारम्भोपचयकरण श्रेयसा सन्निधान, साध्यं सर्वैर्विमलमनसा पूजनं विश्वभर्त्तुः ॥ २ ॥

इति पुनः पुष्पाञ्जलिक्षेपः । ततो धूप गृहीत्वा वृत्तद्वयं पठेत्—

कर्पूरागरुसिल्हचन्दनबलामांसीशशैलेयक—श्रीवासद्रुमधूपरालघुसृणैरत्यन्तमामोदितः ।
व्योमस्थः प्रसरच्छशांककिरणज्योतिः प्रतिच्छादको, धूमो धूपकृतो जगत्त्रयगुरोः सौभाग्यमुत्तंसतु ॥ १ ॥
( शार्दूल० )

सिद्धाचार्यप्रभृतीन् पंचगुरून् सर्वदेवगणमधिकम् । क्षेत्रे काले धूपः प्रीणयतु जिनार्चनारचितः ॥२॥ (आर्या)

इति धूपोत्क्षेपः । शक्रस्तवपाठश्च । पुनः पुष्पाञ्जलिं गृहीत्वा वसन्ततिलकोपजाती पठेत्—

जन्मन्यनन्तसुखदे भुवनेश्वरस्य, सुत्रामभिः कनकशैलशिरःशिलायाम् ।
स्नात्रं व्यधायि विविधाम्बुधिकूपवापी—कासारपल्वलसरित्सलिलैः सुगन्धैः ॥ १ ॥
तां बुद्धिमाधाय हृदीह काले, स्नात्रं जिनेन्द्रप्रतिमागणस्य ।
कुर्वन्ति लोकाः शुभभावभाजो, महाजनो येन गतः स पन्थाः ॥ २ ॥

इति पुष्पाञ्जलिक्षेपः । ततः पुष्पसमूहं गृहीत्वा वृत्तम्—

परिमलगुणसारसद्गुणाढ्या, बहुसंसक्तपरिस्फुरद्द्विरेफा ।
बहुविधबहुवर्णपुष्पमाला, वपुषि जिनस्य भवत्वमोघयोगा ॥ १ ॥

अनेन वृत्तेनापादान्तशिरोऽन्तं जिनप्रतिमायां पुष्पारोपणम् । पूर्ववृत्तेन (कर्पूर०) धूपोत्क्षेपः । शक्रस्तवपाठश्च ।
ततः पुष्पाञ्जलिं करे गृहीत्वा शार्दूलोपजाती पठेत्—

यः साम्राज्यपदोन्मुखे भगवति स्वर्गाधिपैर्गुम्फितो.
मंत्रित्व वलनाथतामधिकृतिं स्वर्णस्य कोशस्य च ।
बिभ्रद्भिः कुसुमाञ्जलिर्विनिहितो भक्त्या प्रभोः पादयो–
र्दुःखौघस्य जलाञ्जलिः स तनुतादालोकनादेव हि ॥ १ ॥

चेतः समाधातुमतीन्द्रियार्थे पुण्य विधातु गणनात्यतीतम् ।
निक्षिप्यतेऽर्हत्प्रतिमापदाग्रे, पुष्पाञ्जलिः प्रोद्गतभक्तिभावैः ॥ २ ॥

इति पुष्पाञ्जलिक्षेपः । पूर्ववृत्तेन ( कर्पूरसिल्हा० ) धूपोत्क्षेपः । शक्रस्तवपाठश्च । ततः पुष्पादिभिः प्रतिमा पूज्यते । ततः स्नात्रकलशप्रगुणीकरणम् । ततः कलशास्तु मणि–स्वर्ण–रूप्य–ताम्र–मिश्रधातु–मृण्मयाः स्नात्रचतुष्किकोपरि स्थाप्याः । तेषु सर्वजलाशयोदकानि गगोदकमिश्राणि निवेशयेत् । चदन–कुकुम–कर्पूरादिभिः सुगंधद्रव्यैर्वासयेत्, चदनादिभिः कुसुममालाभिश्च कलशान् पूजयेत् । जलपुष्पाद्यभिमत्रणमत्रास्ते पूर्वोक्ता एव । ततः स एकः श्राद्धोऽन्येऽपि च बहवः पूर्वोदितवेषशौचभाजो गन्धानुलिप्तकरा मालाविभूषितकठा विशिष्टमणिकनकादिविभूषणास्तदभावे च चदनकुकुमकृतविभूषणास्तान् कलशान् करे दधति । ततस्ते स्वस्वप्रज्ञानुसारेण जिनजन्माभिषेकाकितस्नात्रस्तोत्राणि सजिनस्तुतिषट्पदानि पठन्ति । तत इमानि वृत्तानि पठेयुः—

जाते जन्मनि सार्वविष्टपपतेरिन्द्रादयो निर्जरा-
नीत्वा तं करसम्पुटेन बहुभिः सार्द्धं विशिष्टोत्सवे ।
शृंगे मेरुमहीधरस्य मिलिते सानन्ददेवीगणे,
स्नात्रारंभमुपानयन्ति बहुधा कुंभांबुगंधादिकम् ॥ १ ॥ ( शार्दूल० )

योजनमुखान् रजतनिष्कमयान् मिश्रधातुमृद्रचितान् ।
दधते कलशान् संख्या तेषां युगपद्रदन्तिमिता ॥ २ ॥ ( आर्या० )

वापीकूपहृदाम्बुधितडागपल्वलनदीनिर्झरादिभ्यः ।
आनीतैर्विमलजलै-स्तानधिकं पूरयन्ति च ते ॥ ३ ॥ ( आर्या० )

कस्तूरीघनसारकुंकुमसुराश्रीखंडकक्कोलकै-र्दूर्विरादिसुगन्धवस्तुभिरलंकुर्वन्ति तत्संवरम् ।
देवेन्द्रावरपारिजातबकुलश्रीपुष्पजातीजपा-मालाभिः कलशाननानि दधते संप्राप्तहारस्रजः ॥ ४ ॥
( शार्दूल० )

ईशानाधिपतेर्निजांककुहरे संस्थापितं स्वामिनं, सौधर्माधिपनिर्मिताद्भुतचतुःप्रांशूक्षशृंगोद्गतैः ।
धारावारिभरैः शशांकविमलैः सिंचन्त्यनन्यातयः शेषाश्चैव सुराप्सरःसमुदयाः कुर्वन्ति कौतुहलम् ॥ ५ ॥
( शार्दूल० )

वीणामृदंगतिमिलार्द्रकराहनूर—ढकाहुडुकपणवस्फुटकाहलाभिः ।
सद्वेणुझर्झरकदुदुभिखिंखिणीभिः, वाद्यैः सृजन्ति सकलाप्सरसो विनोदम् ॥६॥ ( वसन्ततिलका० )
शेषाः सुरेश्वरास्तत्र गृहीत्वा करसम्पुटैः । कलशांस्त्रिजगन्नाथ स्नपयन्ति महामुदः ॥ ७ ॥ (श्लोकः)
तस्मिंस्तादृश उत्सवे वयमपि स्वर्लोकसवासिनो, भ्रान्ता जन्मविवर्त्तनेन विहितश्रीतीर्थसेवाधियः ।
जातास्तेन निशुद्धबोधमधुना सम्प्राप्य तत्पूजन,
स्मृत्वैतत् करवाम विष्टपविभोः स्नात्र मुदामास्पदम् ॥ ८ ॥ (शार्दूल०)

नालत्तणंमि सामिअ सुमेरुसिहरमि कणयकलसेहिं ।
तिअसासुरेहिं ण्हविओ ते धन्ना जेहिं दिट्ठो सि ॥ ९ ॥

इति कलशैः प्रतिमाभिषेचनम् । ततः सर्वेऽपि गुरुक्रमविशेषेण पुरुषाः स्त्रियोऽपि गन्धोदकैः स्नात्र कुर्वन्ति, ततोऽभिषेकान्ते गन्धोदकपूर्णं कलशं गृहीत्वा—

सघे चतुर्विध इह प्रतिभासमाने, श्रीतीर्थपूजनकृतप्रतिभासमेते ।
गन्धोदकैः पुनरपि प्रभवत्वजस्रं, स्नात्रं जगत्त्रयगुरोरतिपूतधारैः ॥ १ ॥

इति जिनपादोपरि कलशाभिषेक विधाय स्नात्रनिवृत्तिः ॥ [ पचामृतस्नात्रयुक्तिस्तु

शान्तिकपौष्टिकप्रतिष्ठोपयोगितया वृद्धस्नात्रविधौ कथयिष्यते ॥ अर्हत्श्वेताम्बरमते पंचामृतस्नात्रविधिः शान्तिकादिषु भवति, नित्यपर्वस्नात्रं गन्धोदकैरेव ]

अथ दिक्पालपूजनम् । ततः पुष्पाञ्जलिं गृहीत्वा वृत्तम्—

इन्द्राग्ने यम निर्ऋते जलेश वायो वित्तेशेश्वरभुजगा विरंचिनाथ ।
संघटाधिकतमभक्तिभारभाजः स्नात्रेऽस्मिन् भुवनविभोः श्रियं कुरुध्वम् ॥१॥

इति स्नपनपीठपार्श्वस्थकल्पितदिक्पालपीठोपरि पुष्पाञ्जलिं क्षिपेत् । ततस्तत्पीठोपरि दिक्षु यथाक्रमं दिक्पालान् स्थापयेत् । तत एकैकं दिक्पालं प्रति पूजा । तत्र प्रथममिन्द्रं प्रति जलगन्धादि गृहीत्वा शिखरिणीवृत्तपाठः—

सुराधीश श्रीमन् सुदृढतरसम्यक्त्ववसते, शचीकान्तोपान्तस्थित विबुधकोट्या नतपद ।
ज्वलद्वज्राघातक्षपितदनुजाधीशकटक, प्रभोः स्नात्रे विघ्नं हर हर हरे पुण्यजयिनाम् ॥ १ ॥

ॐ शक्र ! इह जिनस्नात्रमहोत्सवे आगच्छ आगच्छ, इदं जलं गृहाण गृहाण, गन्धं गृहाण गृहाण, धूपं गृहाण गृहाण, दीपं गृहाण गृहाण, नैवेद्यं गृहाण गृहाण, विघ्नं हर हर, दुरितं हर हर, शान्तिं कुरु कुरु, तुष्टिं कुरु कुरु, पुष्टिं कुरु कुरु, ऋद्धिं कुरु कुरु, वृद्धिं कुरु कुरु स्वाहा । इति जल-गन्ध-पुष्पादिभिरिन्द्रपूजनम् ॥१॥ ततोऽग्निं प्रति—

बहिरन्तरतेजसा विदधत् कार्यकारणसंगतिम्। जिनपूजन आशुशुक्षिणो कुरु विघ्नप्रतिघातमञ्जसा ॥ १ ॥
( व्यपच्छंदसिकवृत्तपाठः )

ॐ अग्ने इह जिनस्नानमहोत्सवे आगच्छ आगच्छ, इद जल० इत्यादि पूर्ववत् ॥ २ ॥ यमं प्रति—
( वसन्ततिलकापाठः— )

दीप्ताजनप्रभ तनोतु च सन्निरूपं, वाहारिवाहन समुद्धर दडपाणे ।
सर्वत्र तुल्यकरणीय करस्थधर्म, कीनाश नाशय विपद्विशर क्षणेऽत्र ॥१॥

ॐ यम ! इह० शेष पूर्ववत् ॥ ३ ॥ निर्ऋतिं प्रति— ( आर्यापाठः )

राक्षसगणपरिवेष्टित चेष्टितमात्रप्रकाश हतशत्रो ।
स्नात्रोत्सवेऽत्र निर्ऋते नाशय सर्वाणि दुःखानि ॥ १ ॥

ॐ निर्ऋते ! इह० शेष पूर्ववत् ॥ ४ ॥ वरुण प्रति— ( स्रग्धरावृत्तपाठः— )
कल्लोलानीतलोलाधिककिरणगणस्फीतरत्नप्रपञ्च—प्रोद्भूतोर्मीप्रशोभ वरमकरमहापृष्ठदेशोक्तमानम् ।
चचद्वीरह्लिशृंगिप्रभृतिझषगणैरञ्चितं नाथ्य नो, नर्मच्छिन्ध्यादपाय त्रिजगदधिपतेः स्नात्रसत्रे पवित्रे ॥१॥
ॐ वरुण ! इह० शेष पूर्ववत् ॥५॥ ततो वायु प्रति— ( मालिनीवृत्तपाठः— )

ध्वजपटकृतकीर्तिस्फूर्तिदीप्यद्विमान-प्रसृमरबहुवेगत्यक्तसर्वोपमान ।
इह जिनपतिपूजासन्निधौ मातरिश्वन्, नय नय समुदायं मध्यचाद्यातपानाम् ॥ १ ॥

ॐ वायो ! इह० शेषं पूर्ववत् ॥ ६ ॥ ततः कुबेरं प्रति- (वसन्ततिलकापाठः-)

कैलासवास विलसत्कमलाविलास, संशुद्धहास कृतदौस्थ्यकथानिरास ।
श्रीमत्कुबेर भगवन् स्नपनेऽत्र सर्व-विघ्नं विनाशय शुभाशुभ शीघ्रमेव ॥ १ ॥

ॐ कुबेर । इह० शेषं पूर्ववत् ॥ ७ ॥ ईशानं प्रति- (वसन्ततिलका-)

गंगातरंगपरिखेलनकीर्णवारि-प्रोद्यत्कपर्दपरिमण्डितपार्श्वदेशम् ।
नृत्यं जिनस्नपनहृष्टहृदः स्मरारे-र्विघ्नं हरतु सकलस्य जगत्त्रयस्य ॥ १ ॥

ॐ ईशान ! इह० शेषं पूर्ववत् ॥ ८ ॥ ततो नागान् प्रति- ( वैतालीयपाठः- )

फणिमणिमहसा विभासमानाः कृतयमुनाजलसंश्रयोपमानाः ।
फणिन इह जिनाभिषेककाले बलिभवनादमृतं समानयन्तु ॥ १ ॥

ॐ नागा ! इह० शेषं पूर्ववत् ॥ ९ ॥ ब्रह्माणं प्रति- ( द्रुतविलम्बितवृत्तम्- )

विशदपुस्तकशस्तकरद्वयः प्रथितवेदतया प्रमदप्रदः ।
भगवतः स्नपनावसरे चिरं, हरतु विघ्नभयं द्रुहिणो विभुः ॥ १ ॥

ॐ ब्रह्मन् इह० शेष पूर्ववत् ॥ १०॥ एवं क्रमेण दिक्पालपूजनम् ॥

अथ ग्रहपूजनम्– ततः पुनरपि पुष्पाञ्जलिं करे गृहीत्वा– आर्यावृत्तपाठः–

दिनकरहिमकरभूसुत–शशिसुतबृहतीशकाव्यरवितनयाः ।
राहो केतो सक्षेत्रपाल जिनस्यार्चने भवत सन्निहिताः ॥ १ ॥

इति ग्रहपीठोपरि पुष्पाञ्जलिं क्षिपेत् । तत पूर्वादिक्रमेण सूर्य–शुक्र-मङ्गल-राहु-शनि-चन्द्र-बुध-बृहस्पतीन् ग्रहान् स्थापयेत् । अधः केतुम् उपरि क्षेत्रपाल च स्थापयेत् । ततः सूर्यं प्रति– ( वसन्ततिलकावृत्तपाठः– )

विश्वप्रकाश कृतभव्यशुभावकाश ध्वान्तप्रतानपरितापन सद्विकाश ।
आदित्य नित्यमिह तीर्थकराभिषेके कल्याणपल्लवनमाकलय प्रयत्नात् ॥ १ ॥

ॐ सूर्य ! इह० शेष पूर्ववत् ॥ १ ॥ शुक्र प्रति– ( मालिनीवृत्तपाठः– )

स्फटिकधवलशुद्धध्यानविध्वस्तपाप, प्रमुदितदितिपुत्रोपास्यपादारविन्द ।
त्रिभुवनजनशश्वज्जन्तुजीवातुविद्य, प्रथय भगवतोऽर्चां शुक्र हे वीतविघ्नाम् ॥ १ ॥

ॐ शुक्र ! इह० शेष पूर्ववत् ॥ २ ॥ भौम प्रति— ( आर्यापाठः– )

प्रवलवलमिततकुशल–लालनाललितकविघ्नहते ।
भौम जिनस्नपनेऽस्मिन् विघटय विघ्नागम सर्वम् ॥ १ ॥

ॐ मङ्गल ! इह० शेषं पूर्ववत् ॥ ३ ॥ राहुं प्रति— ( श्लोकपाठः— )

अस्तांहः सिंहसंयुक्त, स्थविक्रममन्दिर ।
सिंहिकासुत पूजाया—मत्र सन्निहितो भव ॥ १ ॥

ॐ राहो ! इह० शेषं पूर्ववत् ॥ ४ ॥ शनिं प्रति—

फलिनीदलनीललीलयान्तः स्थगितसमस्तवरिष्ठविपजात ।
रवितनय नय प्रबोधमेतान् जिनपूजाकरणैकसावधानान् ॥ १ ॥

ॐ शने ! इह० शेषं पूर्ववत् ॥ ५ ॥ चन्द्रं प्रति— ( द्रुतविलम्बितवृत्तपाठः— )

अमृतवृष्टिविनाशितसर्वदो—पचितविघ्नविपः शशलांछनः ।
वितनुतां तनुतामिह देहिनां प्रसृततापकरस्य जिनार्चने ॥ १ ॥

ॐ चन्द्र ! इह० शेषं पूर्ववत् ॥ ६ ॥ बुधं प्रति—वृत्तम्—

बुध विबुधगणार्चितांघ्रियुग्म प्रमथितदैत्यविनीतदुष्टशास्त्र ।
जिनचरणसमीपगोऽधुना त्वं रचय मतिं भवघातनप्रकृष्टाम् ॥ १ ॥

ॐ बुध ! इह० शेषं पूर्ववत् ॥ ७ ॥ गुरुं प्रति— वृत्तम्—

सुरपतिहृदयावतीर्णमंत्र, प्रचुरकलाविकलप्रकाश भास्वन् ।
जिनपतिचरणाभिषेककाले, कुरु बृहतीवर विघ्नप्रणाशम् ॥ १ ॥

ॐ गुरो ! इह शेष पूर्ववत् ॥ ८ ॥ केतु प्रति— ( द्रुतविलम्बितवृत्तपाठः— )

निजनिजोदययोगजगत्त्रयी, कुशलविस्तरकारणता गतः ।
भवतु केतुरनश्वरसम्पदा सततहेतुरवारितविक्रमः ॥ १ ॥

ॐ केतो ! इह० शेषं पूर्ववत् ॥ ९ ॥ क्षेत्रपाल प्रति— (आर्या )

कृष्णसितकपिलवर्ण—प्रकीर्णकोपासिताङ्घ्रियुग्म सदा ।
श्रीक्षेत्रपाल पालय, भविकजन विघ्नहरणेन ॥ १ ॥

ॐ क्षेत्रपाल ! इह शेष पूर्ववत् ॥१०॥ इति ग्रह—क्षेत्रपालपूजा ॥ ( विद्यादेवता—शासनयक्ष—यक्षिणी—सुरलोकाधिपूजन बृहत्स्नात्रविधौ कथयिष्यते प्रतिष्ठाशांतिकपौष्टिकोपयोगित्वात् )। ततो जिनप्रतिमाया गन्धपुष्पाक्षतधूपदीपपूजा पूर्वमंत्रैरेव ( "इद गन्धं०" गन्धपूजा, "नानावर्ण०" पुष्पपूजा, "प्रीणन०" अक्षतपूजा, "श्रीखण्डा०" धूपपूजा, "पञ्चज्ञान०" दीपपूजा, मन्त्र पृष्ठे ६ । ततः करे वस्त्रं गृहीत्वा— (वसन्ततिलकावृत्तपाठः— )

त्यक्ताखिलार्थवनितासुतभूरिराज्यो, निःसंगतामुपगतो जगतामधीशः ।
भिक्षुर्भवन्नपि स वर्ष्मणि देवदूष्य-मेकं दधाति वचनेन सुरासुराणाम् ॥ १ ॥

इति वस्त्रपूजा । ततो नानाविध-खाद्य-पेय-चूष्य-लेह्य-संयुतं-नैवेद्यं स्थालद्वये विधाय, एकं पात्रं जिनाग्रतः संस्थाप्य श्लोकपाठः-

सर्वप्रधानसद्भूत, देहि देहं सुपुष्टिदम्। अन्नं जिनाग्रे रचितं, दुःखं हरतु नः सदा ॥ १ ॥

इति जलचुलुकेन प्रतिमाया नैवेद्यदानम् । ततो द्वितीयपात्रे-

भोः भोः सर्वे लोकपालाः सम्यग्दृशः सुराः । नैवेद्यमेतद् गृह्णन्तु भवन्तो भयहारिणः ॥ १ ॥

इति ग्रहदिक्पालादीनां जलचुलुकेन नैवेद्यदानम् । स्नपनं विनापि पूजायां जिनप्रतिमानैवेद्यदानमनेनैव मंत्रेण । ततः सप्तवर्तिकावदारात्रिकं मंगलदीपश्च पूर्ववत् । " सप्तभीति० " । " विश्वत्रय० " । शक्रस्तवश्च । यस्याः प्रतिमायाः स्नानस्थितायाः स्नपनं भवति तस्याः सर्वमपि तत्रैव क्रियते । ततो धूपं गृहीत्वा-

श्रीखंडकर्पूरकुरंगनाभि-प्रियंगुमांसीनतकाकतुंडैः ।
जगत्त्रयस्याधिपतेः सपर्या-विधौ विदध्यात् कुशलानि धूपः ॥ १ ॥

अनेन वृत्तेन सर्वपुष्पाञ्जलीनामंतराले धूपोत्क्षेपः शक्रस्तवपाठश्च । ततः प्रतिमाविसर्जनम् । तन्मंत्रो यथा-

प्रथमदिने
प्रातः
करणीयः

ॐ अर्हं नमो भगवतेऽर्हते समये पुनः पूजा प्रतीच्छ स्वाहा। इति पुष्पन्यासेन प्रतिमाविसर्जनम्। ततः पुष्पं गृहीत्वा—

ॐ ह्रः इन्द्रादयो लोकपालाः सूर्यादयो ग्रहाः सक्षेत्रपालाः सर्वदेवाः सर्वदेव्यः पुनरागमनाय स्वाहा। इति पुष्पपूजादिभिर्ग्रहदिक्पालविसर्जनम्। ततः—

आज्ञाहीनं क्रियाहीन मंत्रहीनं च यत्कृतम्। तत्सर्वं कृपया देवाः क्षमन्तु परमेश्वराः ॥ १ ॥

आह्वाहन न जानामि न जानामि विसर्जनम्। पूजा चैव न जानामि त्वमेव शरण मम ॥ २ ॥

कीर्तिं श्रियो राज्यपद सुरत्व न प्रार्थये किंचन देवदेव। मत्प्रार्थनीयं भगवन् प्रदेय त्वद्दासता मा नय सर्वदापि ॥३॥

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता।
क्षमस्व तं नाथ कुरु प्रसादं, प्रायो नराः स्युः प्रचुरप्रमादाः ॥ १ ॥

इति सर्वकरणीयान्ते जिनप्रतिमादेवादिविसर्जनविधिः। अर्हदर्चनविधानपि एव विसर्जनं ज्ञेयम्।

इति सर्वकरणीयान्ते जिनप्रतिमादेवादिविसर्जनविधिः॥ इति प्रथमदिने प्रातः करणीयो विधिः ॥

॥ इति लघुस्नात्रविधिः ॥ आचारदिनकर पृ. ६१—६६ ॥ इति प्रथमदिने प्रातः करणीयो विधिः ॥

卐卐卐

## अथ पञ्चविंशतिकुसुमाञ्जलयः

( प्रथमदिने मध्याह्ने पूर्वं पृष्ठ २ तः पृष्ठ ८ इति जिनपूजनम्। तत्पर्यंतं पूजनविधिं विधाय तत्पश्चात् कुसुमाञ्जलिक्षेपं विदध्यात् )

ततः श्राद्धः स्नानपीठं प्रक्षाल्य स्वयं स्नातानुलिप्तः शुचिवस्त्रधारी कङ्कणस्वर्णमुद्रांकितहस्तो जिनोपवीतोत्तरासंगधरः उत्तरासंगवसनेन मुखमाच्छाद्य चलस्थिरप्रतिमाया अग्रतः स्थित एकाकी द्वित्रिचतुष्पंचयुतो वा सर्वैः समं करसंपुटे कुसुमाञ्जलिं निधायेति पठेत्—

लक्ष्मीरद्यानवद्यप्रतिभपरिनिगद्याद्यपुण्यप्रकर्षो—त्कर्षैराकृष्यमाणा करतलमतुलारोहमारोहति स्म ।
शश्वद्विश्वातिविश्वोपशमविशदतोद्भासविस्मापनीयं, स्नात्रं सुत्रामयात्राप्रणिधिजिनविभोर्यत्समारब्धमेतत् ॥१॥
कल्याणोल्लासलास्यप्रसृमरपरमानन्दकन्दायमानं, मन्दामन्दप्रबोधप्रतिनिधिकरुणाकारकं दायमानम् ।
स्नात्रं श्रीतीर्थभर्तुर्घनसमयमिवात्मार्थकं दायमानं, दद्याद् भक्तेषु पापप्रशमनमहिमोत्पादकं दायमानम् ॥२॥
देवादेवाधिनाथप्रणमननवनानन्तसानन्तचारि, प्राणप्राणावयानप्रकटितविकटव्यक्तिभक्तिप्रधानम् ।

शुक्लं शुक्लं च किंचिच्चिदधिगमसुखं सत्सुखं स्नात्रमेत-
न्न्यान्न्यात् प्रकृष्टं दिशतु शमवतां सन्निधानं निधानम् ॥ ३ ॥

विश्वान् सभाव्यलक्ष्मीः क्षपयति दुरितं दर्शनादेव पुंसा-
मामन्नो नास्ति यस्य त्रिदशगुरुरपि प्राज्यराज्यप्रभावे ।
भानाभिर्मुन्य शोच्यानजनि जिनपतिर्यः समायोगयोगी,
तस्येयं स्नात्रवेला कलयतु कुशलं कालधर्मा प्रणाशः ॥ ४ ॥

नालीकं यन्मुखस्योपमितिमलभत् क्वापि वार्तान्तराले,
नालीकं येन किंचित् प्रवचन उदितं शिष्यपर्षत्समक्षम् ।
नालीकं चापशस्त्या व्यरचयत न वै यस्य सद्रोहमोहं,
नालीकं तस्य पादप्रणतिविरहितं नोऽस्तु तत्स्नात्रकाले ॥ ५ ॥ (स्रग्धरा०)

अनेन वृत्तपञ्चकेन कुसुमाञ्जलिक्षेपः । ततश्चन्दनं गृहीत्वा-

फणिनिकरविवेष्टनेऽपि येनोज्झितमतिशैत्यमनारतं न किंचित् ।
मलयशिखरिशेखरायमाणं तदिदं चन्दनमर्हतोऽर्चने स्युः ॥ १ ॥

अनेन वृत्तेन चन्दनचर्चनम् । ततः शक्रस्तवपाठः । ततो धूपं गृहीत्वा—

प्रथमदिने
मध्याह्ने
करणीय

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्षात्, प्रौढिप्राप्तप्रकर्षः क्षितिरुहरसजः क्षीणपापावगाहः ।
धूपोऽकूपारकल्पप्रभवमृतिजराकष्टविस्पष्टदुष्ट—स्फूर्जत्संसारपाराधिगममतिधियां विश्वभर्त्तुः करोतु ॥ १ ॥
अनेन स्रग्धरावृत्तेन सर्वकुसुमांजल्यन्तरालेषु बिम्बस्य धूपदानम् । पुनः कुसुमाञ्जलिं गृहीत्वा—(२)

कल्पायुः स्थितिकुंभकोटिविटपैः सर्वैस्तुरापाङ्गणैः, कल्याणप्रतिभासनाय विततप्रव्यक्तभक्त्यानतैः ।
कल्याणप्रसरैः पयोनिधिजलैः शक्त्याभिषिक्ताश्च ये, कल्याणप्रभवाय सन्तु सुधियां ते तीर्थनाथाः सदा ॥१॥
रागद्वेषजविग्रहप्रमथनः संक्लिष्टकर्मावली, विच्छेदादपविग्रहः प्रतिदिनं देवासुरश्रेणीभिः ।
सम्यक् चर्चितविग्रहः सुतरसा निर्धूतमिथ्यात्वदृक्, तेजः क्षिप्तपविग्रहः स भगवान् भूयाद् भवोच्छित्तये ॥२॥
संक्षिप्ताश्रवविक्रियाक्रमणिकापर्युल्लसत्संवरं, षण्मध्यप्रतिवासिवैरिजलधिप्रष्टंभने संवरम् ।
उद्यत्कामनिकामदाहहुतभुग्विध्यापने संवरं वन्दे श्रीजिननायकं मुनिगणप्राप्तप्रशं संवरम् ॥३॥
श्रीतीर्थेश्वरमुत्तमैर्निजगुणैः संसारपाथोनिधेः, कल्लोलप्लवमानवप्रवरता सन्धानविध्यापनम् ।
वन्देऽनिन्द्यसदागमार्थकथनप्रौढप्रपंचैः सदा, कल्लोलप्लवमानवप्रवरता सन्धानविध्यापनम् ॥ ४ ॥
स्नात्रं तीर्थपतेरिदं सुजनताखानिः कलालालसं, जीवातुर्जगतां कृपाप्रथनकृत् क्लृप्तं सुराधीश्वरैः ।
अंगीकुर्म इदं भवाच्च बहुलस्फूर्तेः प्रभावैर्निजैः, स्नात्रं तीर्थपतेरिदं सुजनताखानिः कलालालसम् ॥ ५ ॥
( शार्दूल० )

प्रथमदिने
मध्याह्ने
करणीयः

अनेन वृत्तपञ्चकेन कुसुमाञ्जलिप्रक्षेपः । ततः कुङ्कुम गृहीत्वा—

दूरीकृतो भगवता रससश्रयो यो, ध्यानेन निर्मलतरेण स एव राग ।
मुक्त्यै सिसेविपुरमु जगदेकनाथ—मगे विभाति निवसन् घुसृणच्छलेन ॥१॥

इति कुङ्कुमार्चनम् । ततः शक्रस्तनपाठः । ततः ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः । पुनः कुसुमाञ्जलिं गृहीत्वा—(३)

प्रभोः पादद्वन्द्वे नितणरसुधाभुक् शिखरिणी, वसभूतश्रेयोहरिमुकुटमाला शिखरिणी ।
विभाति प्रश्लिष्टा समुदयरुथा नै शिखरिणी, नतेजः पूजाढ्या सुरवसनकान्त्या शिखरिणी ॥१॥
जगद्वन्द्या मूर्तिः प्रहरणविकारैश्च रहिता, विशाला ता मुक्ति सपदि सुददाना विजयते ।
विशालाता मुक्ति सपदि सुददाना विजयते, दधाना ससारच्छिदुरपरमानन्दकलिता ॥२॥
भवाभासंसार सदिहरणकम्प प्रतिनयत्, कलाल नः कान्तप्रगुणगणनासादकरणः ।
भवाभाससार सदिहरणकम्पं प्रतिनयत्, कलाल वः कान्तप्रगुणगणनासादकरणः ॥३॥
जय जीव भानु वलिनमनिस संगत इला—विलास' सत्कालक्षितिरलसमानो विसरणे ।
जय जीन भानु वलिनमनिसं सगत डला—विलासः सत्कालक्षितिरलसमानो विसरणे ॥४॥
अमाद्यद्वेपोऽर्हन् नवनमनतिक्रान्तकरणै—रमाद्यद्वेपोऽर्हन् नवनमनतिक्रान्तकरणैः ।
सदा रागत्यागी विलसदनघो निमथनः, सदा रागत्यागी विलसदनघो विमथनः ॥५॥ (शि०)

इति वृत्तपञ्चकेन कुसुमाञ्जलिक्षेपः ततो यक्षकर्दमं गृहीत्वाः—

घ्राणतर्पणसमर्पणापटुः क्लृप्तदेवघटनागवेषणः । यक्षकर्दम इनस्य लेपनात्, कर्दमं हरतु पापसंभवम् ॥१॥

बिम्बस्य यक्षकर्दमविलेपनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः पुनः कुसुमाञ्जलिं गृहीत्वा—(४)

आनन्दाय प्रभव भगवन्नंगसङ्गावसान आन्ददाय प्रभव भगवन्नंगसङ्गावसान ।
आनन्दाय प्रभव भगवन्नंगसङ्गावसान आनन्दाय प्रभवभगवन्नंगसङ्गावसान ॥ १ ॥

लाभप्राप्तप्रसृमरमहाभागनिर्मुक्तलाभं देवव्रातप्रणतचरणांभोज हे देवदेव ।
जातं ज्ञानं प्रकटभुवनत्राससज्जंतुजातं हंसश्रेणीधवलगुणभा सर्वदा जातहंस ॥ २ ॥

जीवन्नंतर्विषमविषयच्छेदक्लृप्तासिवार जीवस्तुत्यप्रथितजननांभोनिधौ कर्णधार ।
जीवप्रौढिप्रणयनमहास्त्रणासूत्रधार जीवस्पर्धारहितशिशिरेन्दोपमेयाब्दधार ॥ ३ ॥

पापाकांक्षामथनमथनप्रौढविध्वंसिहेतो क्षान्त्याधास्थानिलयनिलयश्रान्तिसंप्राप्ततत्त्व ।
साम्यकाम्यप्रनयननयनव्याप्तिजातावकाश स्वामिन्नन्दाशरणशरणप्राप्तकल्याणमाल ॥ ४ ॥

जीवाः सर्वे रचितकमल त्वां शरण्यं समेताः क्रोधाभिख्याज्वलनकमलकान्तविश्वारिचक्रम् ।
भव्यश्रेणिनयनकमल प्राग्विबोधकभानो मोहासौख्यप्रजनकमलच्छेदमस्मासु देहि ॥ ५ ॥

( मन्दाक्रान्ता० )

इति वृत्तपञ्चकेन पुष्पाञ्जलिक्षेपः। ततः कर्पूरं गृहीत्वा—

निरामयत्वेन मलोज्झितेन गन्धेन सर्वप्रियताकरेण। गुणैस्त्वदीयातिशयानुकारी नवाङ्गमागच्छतु देवचन्द्रः ॥१॥

विम्बे कर्पूरारोपणम्। ततः शक्रस्तवः। ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः। पुनः कुसुमाञ्जलिं गृहीत्वा—(५)

संसारवारिनिधितारण देवदेव संसारनिर्जितसमस्तसुरेन्द्रशैल।
संसारबन्धुरतया जिनराजहंस संसारमुक्त कुरु मे प्रकटं प्रमाणम् ॥ १ ॥

रोगादिमुक्तकरणप्रतिभाविलास कामप्रमोदकरणव्यतिरेकघातिन्।
पष्ठाष्टमादिकरणप्रतपप्रवीण मा रक्ष पातकरणश्रमकीर्णचित्तम् ॥ २ ॥

त्वां पूजयामि कृतसिद्धिरमाविलासं नम्रक्षितीश्वरसुरेश्वरसद्विलासम्।
उत्पन्नकेवलकलापरिभाविलासं ध्यानाभिधानमकरन्दनदनाविलासम् ॥ ३ ॥

गम्यातिरेकगुणपापतरावगम्या न व्याप्नुते विषयराजिरपारनव्या।
सेवाभरेण भवतः प्रकटैरसेवा तृष्णा कुतो भवति तुष्टिमता च तृष्णा ॥ ४ ॥

वन्दे त्वदीयवृपदेशनसद्म देव जीवातुलक्षितिमनन्तरमानिवासम्।
आत्मीयमानकृतयोजनविस्तराढ्यं जीवातुलक्षितिमनन्तरमाविलासम् ॥ ५ ॥ (वसन्ततिलका०)

प्रथमदिने
मध्याह्ने
करणीय

इति पुष्पाञ्जलिक्षेपः। ततो वासं गृहीत्वा—

नैर्मल्यशालिन इमेऽप्यजडा अपिंडा संप्राप्तसद्गुणगणा विपदां निरासाः।
त्वद्ज्ञानवज्जिनपते कृतमुक्तिवासा वासा पतन्तु भविनां भवदीयदेहे ॥ १ ॥

इति वासक्षेपः बिम्बे। ततः शक्रस्तवः। ऊर्ध्वाधो॰ वृत्तेन धूपोत्क्षेपश्च। पुनः पुष्पाञ्जलिं गृहीत्वा—(६)

सुरपतिपरिक्लृप्तं त्वत्पुरो विश्वभर्त्तुः, कलयति परमानन्दक्षणं प्रेक्षणीयम्।
न पुनरधिकरागं शान्तचित्ते विधत्ते, कलयति परमानन्दक्षणं प्रेक्षणीयम् ॥ १ ॥

सदयसदयवार्त्तानिर्तितामर्त्यहर्षा, विजयविजयपूजाविस्तरे सन्निकर्षा।
विहितविहितबोधा देशना ते विशाला, कलय कलयमुच्चैर्मय्यनत्यार्द्रचित्ते ॥ २ ॥

विरचितमहिमानं माहिमानन्दरूपं, प्रतिहतकलिमानं कालिमानं क्षिपन्तम्।
जिनपतिमभिवन्दे माभिवन्देतिघातं, सुविशदगुणभारं गौणभारंगसारम् ॥ ३ ॥

सुभवभृदनुकम्पानिर्विशेषं विशेषं, क्षपितकलुपसंघातिप्रतानं प्रतानम्।
पदयुगमभिवन्दे ते कुलीनं कुलीनं, उपगतसुरपर्षत्सद्विमानं विमानम् ॥ ४ ॥

कीरणकीरणदीप्तिर्विस्तरागोतिरागो, विधूतविधुतनूजाक्षान्तिसाम्योऽतिसाम्यः।
विनयविनययोग्यः संपरायो परायो, जयति जयतिरोधानैकदेहः सुदेहः ॥ ५ ॥ (मालिनी॰)

इति पुष्पाञ्जलिः । ततो मृगमदलेपं गृहीत्वा—

श्रितफणिपतिभोगः क्लृप्तसर्वांगयोगः श्लथितसहदरोगः श्रेष्ठिनां सोपभोगः ।
सुरवपुपितरोगः सर्वसंपन्नभोग स्फुटमृगमदभोगः सोऽस्तु सिद्धोपयोगः ॥ १ ॥

इति निम्बे मृगमदलेपः । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—(७)

यशश्वारशुभीकृतानेकलोकः, सुसिद्धान्तसंतर्पितच्छेकलोकः ।
महातत्त्वविज्ञायिसवित्कलोकः प्रतिक्षिप्तकर्मारिवैपाकलोकः ॥ १ ॥

विमानाधिनाथस्तुताङ्घ्रिद्वयश्री—विमानातिरेकाशयः काशकीर्तिः ।
विमानाप्रकाशैर्महोभिः परीतो, विमानायिकैर्लक्षितो नैव किंचित् ॥ २ ॥

क्षमासाधनानन्तकल्याणभालः, क्षमासज्जनानन्तवन्द्याङ्घ्रियुग्म' ।
जगद्भाननानन्तविस्तारितेजाः, जगद्व्यापनानन्तपूः सार्थवाहः ॥ ३ ॥

वपुः सङ्कर सङ्कर खडयन्ति, महासयमं सयम सतनोति ।
कलालालस लालसं नेजसे त, सदा भावन भावन स्थापयामि ॥ ४ ॥

विशाल पर सयमस्थं विशालं विशेप सुविस्तीर्णलक्ष्मीविशेपम् ।
नयानन्दरूप स्वभक्तान्नयान, जिनेश स्तुत स्तौमि देव जिनेशम् ॥ ५ ॥ (भुजङ्गप्रयात०)

इति पुष्पाञ्जलिक्षेपः ततः कालागरुलेपं गृहीत्वा वृत्तम्—
देवादेवाद्यभीष्टः परमपरमहानन्ददातादाता, कालः कालप्रमाथी विशरविशरणः सङ्गतश्रीगतश्रीः।
जीवाजीवाभिमर्शः कलिलकलिलताखंडनार्होडनार्हो, द्रोणाद्रोणास्यलेपः कलयति लयतिग्मापवर्गं पगर्गम् ॥१॥
बिम्बे कालागरुलेपः। पुनः शक्रस्तवः। ऊर्ध्वाधो० वृत्तेन धूपश्च। पुनः पुष्पाञ्जलिं गृहीत्वा—(८)

विधूतकर्माखिलः सनातनो, विधूतहारावलितुल्यकीर्तिभाक्।
प्रयोगमुक्तातिशयोर्जितस्थितिः, प्रयोगशाली जिननायकः श्रिये ॥ १ ॥

सुपुण्यसंदानितकेशवप्रियः, सदैव संदानितपोविधानकः।
सुविस्तृताशोभनवृत्तिरेन्द्रक—स्तिरस्कृताशोभनपापतापनः ॥ २ ॥

स्थिता ततिः पुण्यभृतां क्षमालया, पुरोपि यस्य प्रथिताक्षमालया।
तमेव देवं प्रणमामि सादरं, पुरोपचीर्णेन महेन सादरम् ॥ ३ ॥

कलापमुक्तव्रतसंग्रहक्षमः कलापदेवासुरवन्दितक्रमः।
कलापवादेन विवर्जितो जिनः, कलापमानं वितनोतु देहिषु ॥ ४ ॥

निदेशसंभावितसर्वविष्टपः, सदाप्यदं भावितदस्युसंहतिः।
पुराजनुर्भावितपोमहोदयः, सनामसंभावितसर्वविष्टपः ॥ ५ ॥ (वंशस्थ०)

इति पुष्पाञ्जलिक्षेपः ।

विभूषणोऽप्यद्भुतकान्तविक्रमः, सुरूपशाली स्तुतभीरुविक्रमः ।
जिनेश्वरो भात्यनवो रविभ्रमः, प्रमाथकारी महसातिविभ्रमः ॥ १ ॥

इति बिम्बात् पुष्पालङ्कारावतारणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पा०—(९)

प्रासङ्गतास जिननाथचेष्टित, प्रासङ्गमत्यद्भुतमोक्षवर्त्मनि ।
प्रासङ्गता त्यक्तभवाश्रयाशये, प्रासङ्गवीराद्यभिदे नमामि ते ॥ १ ॥

कल्याणकल्याणकपञ्चकस्तुतः, सभारसभारमणीयविग्रहः ।
सन्तानसन्तानवसश्रितस्थितिः, कन्दर्पकन्दर्पभराज्जयेज्जिनः ॥ २ ॥

विश्वान्धकारैककरापवारणः, क्रोधेभविस्फोटकरापवारणः ।
सिद्धान्तविस्तारकरापवारणः, श्रीवीतरागोऽस्तु करापवारणः ॥ ३ ॥

सभिन्नसभिन्ननयप्रमापणः, सिद्धान्तसिद्धान्तनयप्रमापणः ।
देवाधिदेवाधिनयप्रमापणः, सजातसजातनयप्रमापणः ॥ ४ ॥

कालापयान कलयत्कलानिधिः, कालापरश्लोकचिताखिलक्षितिः ।
कालापवादोज्झितसिद्धिसंगतः, कालापकारी भगवान् श्रियेऽस्तु नः ॥ ५ ॥ (इन्द्रवंशा०)

अनेन वृत्तपञ्चकेन पुष्पाञ्जलिक्षेपः पीठक्षालनजलं गृहीत्वा—

प्रकृतिभासुरभासुरसेवितो, धृतसुराचलराचलसंस्थितिः ।
स्नपनपेषणपेषणयोग्यतां, वहतु संप्रति संप्रतिविष्टरः । ॥ १ ॥

इति स्नपनपीठक्षालनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पाञ्जलिं गृहीत्वा—(१०)

निहितसत्तमसत्तमसंश्रयं, ननु निरावरणं वरणं श्रियाम् ।
धृतमहः करणं करणं धृते—र्नमत लोकगुरुं कगुरुं सदा ॥ १ ॥

सदभिनन्दननन्दनशैत्यको, जयति जीवनजीवनशैत्यभाक् ।
उदितकंदलकंदलखंडनः, प्रथितभारतभारतदेशनः ॥ २ ॥

वृपविधापनकार्यपरंपरा, सुसदनं सदनं चपलं भुवि ।
अतिवसौ स्वकुले परमे पदे, दकमलं कमलं कमलं भुवि ॥ ३ ॥

तव जिनेन्द्र विभाति सरस्वती, प्रवरपारमिता प्रतिभासिनी ।
न यदुपांतगताऽवति बुद्धगीः, प्रवरपारमिता प्रतिभासिनी ॥ ४ ॥

सदनुकम्पनकम्पनवर्जित, द्रुतविकारणकारण सौहृद ।
जय कृपावनपावन तीर्थकृत्, विमलमानसमानससद्यशः ॥ ५ ॥ (द्रुतविलम्बित०)

इति पुष्पाञ्जलिक्षेपः। ततो बिम्बमार्जनवस्त्रं गृहीत्वा—

न हि मलभरो विश्वस्वामिंस्त्वदीयतनौ क्वचिद्, विदितमिति च प्राज्ञैः पूर्वैस्तथाप्यधुनाभवैः।
स्नपनसलिलं स्पृष्ट सद्भिर्महामलमान्तरं, नयति निधनं मार्ज्यं बिम्ब वृथा तव देव हि ॥१॥ (हरिणी)

इति बिम्बमार्जनम्। पुनः शक्रस्तवपाठः ऊर्ध्वाधो०। घृतेन धूपः। पुनः पुष्पाञ्जलिं गृहीत्वा—(११)

सवरः प्रतिनियुक्तसवरो, विग्रहः प्रकमनीयविग्रहः। संयतः सकलुषैरसंयतः, पङ्कहृद्दिशतु शांतिपङ्कहृत् ॥१॥
जंभजित् प्रणतसूरजभजित्, सङ्गतः शिवपद सुसङ्गतः।
जीवनः सपदि सर्वजीवनो, निर्वृतिर्भविकृदत्तनिर्वृतिः ॥ २ ॥
निर्जरप्रतिनुतश्च निर्जरः, पावनः श्रितमहानपावनः।
नायको जितदयाविनायको, हंसगः सविनयोरुहंसगः ॥ ३ ॥
धारितप्रवरसत्कृपाशयः, पाशयष्टिधरदेवसस्तुतः। सस्तुतो दमवता सनातनो नातनः कुगतिसंगभृन्मुधा ॥४॥
लोभकारिपरिमुक्तभूपणो, भूपणो विगतसर्वपातकः।
पातकः कुमनसा महाबलो, ह्यवलोपकरणो जिनः श्रिये ॥ ५ ॥ (रथोद्धता०)

इति पुष्पाञ्जलिक्षेपः ततः पुष्प गृहीत्वा—

कार्यं कारणमीश सर्वभुवने युक्त दरीदृश्यते। त्वत्पूजाविषये द्वयं तदपि न प्राप्नोति योग क्वचित्।

यस्मात्पुष्पममीभिरर्चकजनैस्त्वन्मस्तके स्थाप्यते, तेषामेव पुनर्भवी शिवपदे स्फीतं फलं प्राप्नुयात् ॥१॥
इति बिम्बशिरसि पुष्पारोपणम्। शक्रस्तवः। ऊर्ध्वाधो० वृत्तेन धूपश्च। पुनः पुष्पाञ्जलिं गृहीत्वा-(१२)

महामनोजन्मिनिषेव्यमाणो, नन्याययुक्तोत्थिव एव मर्त्यैः।
महामनोजन्मिनिकृन्तनश्च, नन्याययुग्रक्षिततीर्थनाथः ॥ १ ॥

कामानुयाता निधनं विमुंचन्, प्रियानुलापावरणं विहाय।
गतो विशेषान्निधनं पदं यः, स दुष्टकर्मावरणं भिनत्तु ॥ २ ॥

मृदुत्वसंत्यक्तमहाभिमानो, भक्तिप्रणम्रोरुसहस्रनेत्रः।
अंभोजसंत्यक्तमहाभिमानः, कृतार्थतात्मस्मृतिघस्रनेत्रः ॥ ३ ॥

समस्तसंभावनया वियुक्त-प्रतापसंभावनयाभिनन्दन्।
अलालसंभावनया न कांक्षी, वरिष्ठसंभावनया न कांक्षी ॥ ४ ॥

समस्तविज्ञानगुणावगन्ता, गुणावगन्ता परमाभिरामः।
रामाभिरामः कुशलाविसर्पः, शिलाविसर्पो जयताज्जिनेन्द्रः ॥ ५ ॥ (उपजाति०)

पुष्पाञ्जलिक्षेपः। ततः फलानि गृहीत्वा—

रम्यैरनन्तगुणपङ्करसशोभमानैः, सद्वर्णवर्णिततमैरमृतोपमेयैः ।
स्वाङ्गैरवाद्यफलविस्तरणैर्जिनार्चा–मर्चामि वर्चसि परैः कृतनित्यचर्चैः ॥ १ ॥

बिम्बाग्रे फलढौकनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुन॰ पुष्पाञ्जलिं गृहीत्वा—(१३)

करवालपातरहितां जयश्रियं, करवालपातरहिता जयश्रियम् ।
विनयन्नयापदसुचारिसंयमो, विनयन्नयापदसुचारिसंयमः ॥ १ ॥

इनमन्धतामसहर सदासुख, प्रणमामि कामितफलप्रदायकम् ।
इनमन्धतामसहर सदासुखं, विजये च तेजसि परिष्ठितं चिरम् ॥ २ ॥

निजभावचौरदमन दयानिधिं, दमन च सर्वमुनिमंडलीवृतम् ।
मुनिमंजसा भवसत्पयोनिधौ, विलसत्कनीयंसहित नमामि तम् ॥ ३ ॥

बहुलक्षणौघकमनीयविग्रहः, क्षणमात्रभिन्नकमनीयविग्रहः ।
कमनीयविग्रहपदावतारणो, भवभुक्तमुक्तकुपदानतारणः ॥ ४ ॥

सुरनाथमानहरसपदर्जितः, क्षतराजमानहरहासकीर्तिभाक् ।
विगतोपमानहरणोद्धृताशयो, विगताभिमानहरवध्यशातनः ॥ ५ ॥ (सन्धिनर्पिणी॰)

इति पुष्पाञ्जलिः । अगरुं गृहीत्वा—

धाराधाराभिमुक्तोद्रसबलसबले क्षोदकाम्यादकाम्या, भिक्षाभिक्षाविचारस्वजनितजनितप्रातिमानोऽतिमानः ।
प्राणप्राणप्रमोदप्रणयननयनं धातहंधातहन्ता, श्रीदः श्रीदप्रणोति स्वभवनभवनः काकतुंडाकतुंडाः ॥ १ ॥

इत्यगरुक्षेपः । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—(१४)

ज्ञानकेलिकलितं गुणनिलयं, विश्वसाररचितं गुणनिलयम् ।
कामदाहदहनं परममृतं स्वर्गमोक्षसुखदं परममृतम् ॥ १ ॥

स्वावबोधरचनापरमहितं, विश्वजन्तुनिकरे परमहितम् ।
रागसङ्गिमनसां परमहितं, दुष्टचित्तसुमुचां परमहितम् ॥ २ ॥

भव्यभावजनतापविहननं, भव्यभावजनतापविहननम् ।
जीव जीव भवसारविनयनं, जीव जीव भवसारविनयनम् ॥ ३ ॥

कालपाशपरिघातबहुलं, कालपाशकृतहारविहरणम् ।
नीलकंठसखिसन्निभनादं, नीलकंठहसितोत्तमशयनम् ॥ ४ ॥

न्यायबन्धुरविचारविलसनं, लोकबन्धुरविचारसुमहसम्
शीलसारसनवीरतनुधरं, सर्वसारसनवीरसुपनये ॥ ५ ॥ (जगतिजाति०)

पुष्पाञ्जलिः । वाससंयुक्त धूप गृहीत्वा—

विनयविनयवाक्य—स्कारयुक्तोरयुक्तः, पुरुषपुरुषकाराद् भाननीयोवनीयः ।
जयतु जयतुपारो दीप्रमादे प्रमादे, सपदि सपदि भक्ता वासधूपः सधूपः ॥ १ ॥

इति वासयुक्तधूपोत्क्षेपणम् । शक्रस्तवः ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा— (१५)

आततायिनिकर परिनिम्नन्नाततायिचरितः परमेष्ठी । एकपादरचनासुकृताशी—रेकपाददयिताकमनीयः ॥१॥
वर्षदानकरभाजितलक्ष्मी-श्चारुमौक्तिकरिभाजितवित्तः । मुक्तशुभ्रनतलालसहारो, ध्वस्तभूरितरलालसकृत्यः ॥२॥
युक्तसत्यनहुमाननदान्यः, कल्पितद्रविणमानवदान्यः ।
देशनारचितसाधुविचारो, मुक्तताविजितसाधुविचारः ॥ ३ ॥
उक्तसशयहरोरुकृतान्त—स्तान्तसेवकपलायकृतान्तः । पावनीकृतवरिष्ठकृतान्त—स्ता तथा गिरमवेत्य कृतान्तः ॥४॥
यच्छतु श्रियमनर्गलदानो, दानवस्त्रिदशपुण्यनिदान । दाननार्थकरिविभ्रमयानो, यानवर्जितपदोतिदयानः ॥५॥
( स्वागतावृत्तानि )

इति पुष्पाञ्जलि' । ततो जल गृहीत्वा—

अमृतविहितपोप शैशव यस्य पूर्वा—दमृतपथनिदेशाद् दुर्धरा कीर्तिरासीत् ।

अमृतरचितभिक्षा यस्य वृत्तिव्रतादो–रमृतममृतसंस्थस्यार्चनायास्तु तस्य ॥ १ ॥ ( मालिनी० )

इति जलपूजा । पुन शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा— (१६)

विश्वेशः क्षितिलसमानमानमानः, प्रोद्याति मरुदुपहारहारहारः ।
संत्यक्तप्रवरवितानतानतानः, सामस्त्याद्विगतगानगानगानः ॥१॥

विस्फूर्जन्मथितविकासलासलासः, संक्षेपक्षपितविकारकारकारः ।
सेवार्थव्रजितविकालकालकाल–श्चारित्रक्षरितनिदानदानदानः ॥ २ ॥

पूजायां प्रभवदपुण्यपुण्यपुण्य–स्तीर्थार्थं विलसदगण्यगण्यगण्यः ।
सद्ध्यानैः स्फुरदवलोकलोकलोको, दीक्षायां हतभावजालजालजालः ॥ ३ ॥

स्मृत्यैव क्षतकरवीरवीरवीरः, पादान्तप्रतिनतराजराजराजः ।
सद्विद्याजितशतपत्रपत्रपत्रः, पार्श्वस्थप्रवरविमानमानमानः ॥ ४ ॥

नेत्रश्रीजितजलवाहवाहवाहो, योगित्वामृतघनशीतशीतशीतः ।
वैराग्यादधृतसुवालवालवालो, नामार्थोत्थितमुदधीरधीरधीरः ॥ ५ ॥ ( प्रहर्षिणी० )

इति पुष्पाञ्जलिः । ततोऽक्षतान् गृहीत्वा—

क्षणनतताडनमर्दनलक्षण, किमपि कष्टमवाप्य तितिक्षितम् ।
त्रिभुवनस्तुतियोग्ययदक्षतै-स्तव तनुष्व जने फलित हि तत् ॥ १ ॥

इति त्रिभ्वेऽक्षतारोपणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा—(१७)

तार तारगमलनैः स्यादवतार, सार सारगेक्षणनार्यक्षतसारम् ।
काम काम घातितवन्त कृतकाम, वाम वाम द्रुतमुज्झितगतवामम् ॥ १ ॥
देह देह त्यक्त्वा नम्रोरुविदेह, भाव भावं मुक्त्वा वेगं द्रुतभावम् ।
नार नार शुद्धभवन्त भुननार, मार मार विश्वजय त सुकुमारम् ॥ २ ॥
देन देव पादतलालक्तरदेन, नाथ नाथ चान्तिकदीप्यत्कुरुनाथम् ।
पाक पाकं सयमयन्त कृतपाकं, वृद्ध वृद्ध कुड्मलयन्तं सुरवृद्धम् ॥ ३ ॥
कार कार भाविरसानामुपकार, काम्यं काम्य भाविरसानामतिकाम्यम् ।
जीवं जीव भाविरसानामुपजीव, वन्दे वन्दे भाविरसानामभिनन्दे ॥ ४ ॥
सर्वैः कार्यैः सङ्कुलरत्न कुलरत्न, शुद्धस्फूर्त्या भावचितान विनितानम् ।
वन्दे जातत्राससमाधि ससमाधि, तीर्थाधीश सङ्गतसङ्गं गतसङ्गम् ॥ ५ ॥ ( मत्तमयूर० )

इति पुष्पाञ्जलिक्षेपः । ततः—

स्वामिन् जायेताखिललोकोऽभयरक्षो, नामोच्चारात्तीर्थंकराणामनघानाम् ।
यत्तद्बिम्बे रक्षणकर्म व्यवसेयं, तत्र प्रायः श्लाघ्यतमः स्याद् व्यवहारः ॥ १ ॥

इति बिम्बे ह्रां ह्रीं ह्रूँ ह्रौं ह्रः रूपैः पञ्चशून्यैः पञ्चांग ( ललाट—नयन—हृदय—सर्वांग—पीठ ) रक्षा गुरुभिः कार्या । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपोत्क्षेपश्च । पुनः पुष्पाञ्जलिं गृहीत्वा— (१८)

बद्धनीतासुगं बद्धनीतासुगं, सानुकम्पाकरं सानुकम्पाकरम् ।
मुक्तसङ्गाश्रयं मुक्तसङ्गाश्रयं, प्रीतिनिर्यातनं प्रीतिनिर्यातनम् ॥ १ ॥
सर्वदा दक्षणं पारमार्थे रतं, सर्वदा दक्षणं पारमार्थे रतम् ।
निर्जराराधनं संवराभासनं, संवराभासनं निर्जराराधनम् ॥ २ ॥
तैजसं सङ्गतं सङ्गतं तैजसं, दैवतं बन्धुरं बन्धुरं दैवतम् ।
सत्तमं चागमाच्चागमात्सत्तमं साहसे कारणं कारणं साहसे ॥ ३ ॥
विश्वसाधारणं विश्वसाधारणं वीतसंवाहनं वीतसंवाहनम् ।
मुक्तिचंद्रार्जनं मुक्तिचंद्रार्जनं सारसंवाहनं सारसंवाहनम् ॥ ४ ॥

कामलाभासह पापरक्षाकर, पापरक्षाकर कामलाभासहम् ।
बाणचिद्वर्धनं पूरकार्याघरं पूरकार्याघर बाणचिद्वर्धनम् ॥ ५ ॥ ( चन्द्रानन० ),

अनेन पुष्पाञ्जलिः । ततः—

ससारसंसारसुतारणाय, सन्तानसन्तानकतारणाय,
देवाय देवायतितारणाय, नामोऽस्तु नामोस्तुतितारणाय ॥ १ ॥

इति त्रिम्बस्य निरुञ्छनकरणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पा— (१९)

सदातनु दयाकर दयाकर सदातनुम् । विभाकर विसङ्गर विभङ्गर विभाकरम् ॥ १ ॥
निरञ्जन निरञ्जनं कुपोषण कुपोषणम् । सुराजितं सुराजित धराधर धराधरम् ॥ २ ॥
जन विहाय रञ्जन कुल नितन्य सङ्कुलम् । भव विजित्य सद्धन जयं प्रनोण्य वै जयम् ॥ ३ ॥
घनं शिव शिन घन चिरतन तन चिरम् । कलावृत वृत कला भुनः सम सम भुनः ॥ ४ ॥
नमामि त जिनेश्वर सदाविहारिशासनम् । सुराधिनाथमानसे सदाविहारिशासनम् ॥ ५ ॥ (प्रमाणिका०)

इति पुष्पाञ्जलिः ततो माल्य गृहीत्वा—

प्रकटमानवमानवमडल, प्रगुणमानवमानवसङ्कुलम् । नमणिमानवमानवर चिर, जयति मानवमानवकौसुमम् ॥१॥

इति बिम्बे माल्यारोपणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पां०—(२०)

बहुशोकहरं बहुशोकहरं कलिकालमुदं कलिकालमुदम् ।
हरिविक्रमणं हरिविक्रमणं स कलाभिमतं सकलाभिमतम् ॥ १ ॥
कमलाक्षमलं विनयायतनं विनयायतनं कमलाक्षमलम् । परमातिशयं वसुसंवलभं वसुसंवलभं परमातिशयम् ॥ २ ॥
अतिपाटवपाटवलं जयिनं हतदानवदानवसुं सगुणम् । उपचारजवारजनाश्रयणं प्रतिमानवमानवरिष्टरुचम् ॥ ३ ॥
सरमं कृतमुक्तिविलासरमं भयदं भयमुक्तमिलाभयदम् । परमं व्रजनेत्रमिदं परमं भगवन्तमये प्रभुताभगवम् ॥ ४ ॥
भवभीतनरप्रमदाशरणं शरणं कुशलस्य मुनीशरणम् ।
शरणं प्रणमामि जिनं सदये सदये हृदि दीप्तमहागमकम् ॥ ५ ॥ ( जगति० )

इति पुष्पाञ्जलिः । ततः—

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता ।
क्षमस्व तं नाथ कुरु प्रसादं, प्रायो नराः स्युः प्रचुरप्रमादाः ॥ १ ॥

इति जिनबिम्बस्यांजलिना बद्धेनापराधक्षामणम् । पुनः शक्र० ऊर्ध्वा० धूपः ॥ पुनः पुष्पां०—(२१)

करकलितपालनीयः कमनीयगुणैकनिधिमहाकरणः । करकलितपालनीयः स जयति जिनपतिरकर्मकृतकरणः ॥१॥

विनयनयगुणनिधानं सदारतावर्जन विसमवायम् । वन्दे जिनेश्वरमह सदारतावर्जन विसमवायम् ॥ २ ॥
जलतापवारणमह नमामि सुखद विशालनासचयम् । जलतापवारणमह नमामि सुखद विशालनासचयम् ॥ ३ ॥
शृगारसमर्याद याद.पतिवत् सदाप्यगाधं च । शृगारसमर्यादं यादःपतिवन्दितं प्रतिप्रणामि ॥ ४ ॥
मीमभनार्णवपोत वन्दे परमेश्वर सितश्लोकम् । उज्झितकलत्रपोतं वन्दे परमेश्वरं सितश्लोकम् ॥ ५ ॥
( गीतयः )

इति पुष्पाञ्जलिः । ततो दीप गृहीत्वा—
नीरस्य तर्पहरण ज्वलनस्य ताप तार्क्ष्यस्य गारुडमनगतनोर्विभूषणम् ।
कुर्मो जिनेश्वर जगत्त्रयदीपरूप दीपोपदा तव पुरो व्यनहारहेतोः ॥ १ ॥
इति दीपपूजा । पुनः शक्रस्तन. । ऊर्ध्वाधो० वृत्तेन भूपः ॥ पुनः पुष्पा०— ( २२ )
ननवास वननास गुणहारिणहारिवपुप वपुपम् ।
विजयान विजयान प्रभु प्रभु नमत नमत बलिन बलिनम् ॥ १ ॥
सोमकल सोमकल पङ्के हितं पङ्के हित पुण्ये पुण्ये ।
बहिर्मुख बहिर्मुखमहितं महित परं पर धीरं धीरम् ॥ २ ॥

स्मृतिदायी स्मृतिदायी जिनो जिनोपास्तिकायः कायः ।
नखरायुध न खरायुध वन्द्यो वन्द्यो यक्रग्रक्रत्कान्तः कान्तः ॥ ३ ॥
शङ्काहृत् शङ्काहृत् कुलाकुलाहारः हारः करणः करणः ।
विश्वगुरुर्विश्वगुरुः कविगद् कविगद् महामहाकामः कामः ॥ ४ ॥
कल्याणं कल्याणं प्रथयन् प्रथयन् हिते हिते प्रत्ययः प्रत्ययः ।
परमेष्ठी परमेष्ठी लाभो लाभो वितर वितर सत्त्वं सत्त्वम् ॥ ५ ॥ ( स्वधाजातिः )

इति पुष्पाञ्जलिः । ततो दर्पणं गृहीत्वा—

धीराधीरावगाहः कलिलकलिलताच्छेदकारीदकारी, प्राणिप्राणिवियोगः सरुन्निसरुन्निता भासमानः समानः ।
कल्पाकल्पात्मदर्शः परमपरमताच्छेददक्षोदक्षो, देवादेवात्मगुह्यः स जयति जयनिर्गतप्रकृष्टः प्रकृष्टः ॥ १ ॥
इति बिम्बे दर्पणढौकनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० धूपः । पुनः पुष्पां०— (२३)
अनारतमनारतं सगुणसङ्कुलं सङ्कुलं, विशालकविशालकं स्मरगजेरमंजे समम् ।
सुधाकरं सुधाकरं निजगिराजितं राजितं, जिनेश्वरं जिनेश्वरं प्रणिपतामि तं तापितम् ॥ १ ॥
जरामरणबाधनं विलयसाधुतासाधनं, नमामि परमेश्वरं स्तुतिनिपक्कवागीश्वरम् ।
जरामरणबाधनं विलयसाधुतासाधनं, कुरङ्गनयनालटन् कटुकटाक्षतीव्रव्रतम् ॥ २ ॥

अनन्यशुभदेशनानशगतोरुदेवासुर, पुराणपुरुशार्दनप्रचलदक्षभगिश्रियम् ।
अशेषमुनिमडलीप्रणतिरंजिताखडल, पुराणपुरुशार्दनप्रचलदक्षभंगिश्रियम् ॥ ३ ॥
स्मरामि तव शासन सुकृतसत्त्वसरक्षग, महाकुमतवारण सुकृतसत्त्वसरक्षगम् ।
परिस्फुरदुपासक मृदुतया महाचेतनं, वीतरागजननिर्वृति मृदुतया महाचेतनम् ॥ ४ ॥
पयोधरविहारण जिनवर श्रिया कारण, पयोधरविहारण सरलदेहिना तारणम् ।
अनंगरूपरासनं नमत मक्षु तीर्थेश्वर, अनगरूपरासन विधृतयोगनित्यस्मृतम् ॥ ५ ॥ ( पृथ्वी० )

अनेन पुष्पाजलिः । ततः—

त्वय्यज्ञाते स्तुतिपदमहो किं त्वयि ज्ञातरूपे, स्तुत्युत्कण्ठा न तदुभयथा त्वत्स्तुतिर्नाथ योग्या ।
तस्मात्सिद्ध्युद्र्जनविधिना किंचिदाख्यातिभाजो, लोका भक्तिप्रगुणहृदया नापराधास्पद स्युः ॥ १ ॥
इति वृत्तं पठित्वा अधिकृतजिनस्तोत्र पठेन् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पा-
जलिं गृहीत्वा— (२४)

कुलालता च पर्याप्त निर्माणे शुभकर्मणाम् । कुलालता च पर्याप्त वन्दे तीर्थपतिं सदा ॥ १ ॥
जयताञ्जगतामीशः रूपवत्तापमानदः । निरस्तममतामायः रूपवत्तापमानदः ॥ २ ॥

महामोहमहाशैल पविज्ञानपरायण । परायणपविज्ञान जय पारगतेश्वर ॥ ३ ॥
समाहितपरिवार परिवारसमाहित । नमोऽस्तु ते भवच्छेद्यो भवच्छेद्यो नमोऽस्तु ते ॥ ४ ॥
वराभिख्य वराभिख्य कृपाकर कृपाकर । निराधार निराधार जयानत जयानत ॥ ५ ॥ (श्लोकाः)

अनेन पुष्पांजलिः । ततः—

न स्वर्गाप्सरसां स्पृहा समुदयो नो नारकोच्छेदने, नो संसारपरिक्षितौ न च पुनर्निर्वाणनित्यस्थितौ ।
त्वत्पादद्वितयं नमामि भगवन् किन्त्वेककं प्रार्थये, त्वद्भक्तिर्मम मानसे भवभवे भूयाद्विभो निश्चला ॥ १ ॥
इत्यञ्जलिं कृत्वा बिम्बाग्रे विज्ञप्तिकां कुर्यात् । ( शान्तिनाथ-भगवतः स्तवनं ब्रूयात् )

पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पां० ( २५ )

अधिकविरसः शृङ्गाराङ्गः समाप्तपरिग्रहो, जयति जगतां श्रेयस्कारी तवागमविग्रहः ।
अधिकविरसः शृङ्गाराङ्गः समाप्तपरिग्रहो, न खलु कुमतस्पृहे यत्र प्रवर्तितविग्रहः ॥ १ ॥
विषयविषमं हन्तु मंक्षु प्रगाढभवभ्रमं, बकुलवलिनो देवाधीशा नितान्तमुपासते ।
तव वृषवनं यस्मिन् कुंजान् महत्तमयोगिनो, बकुलवलिनो देवाधीशा नितान्तमुपासते ॥ २ ॥
समवसरणं साधुव्याघ्रैर्वृषैरहिभिर्वरं, जयति मधुमिल्लक्ष्मानेकाविनश्वरनाटकम् ।
तव जिनपते कांक्षापूर्तिं प्रयच्छतु मंकुलं, समवसरणं साधुव्याघ्रैर्वृषैरहिभिर्वरम् ॥ ३ ॥

तन चिदुदयो विश्वस्वामिन्नियर्ति विशकितो, जलधरपद स्वर्गव्यूहं भुजंगगृहं परम् ।
जलधरपद स्वर्गव्यूहं भुजङ्गगृह पर, त्यजति भवता कारुण्याढ्याक्षिपक्ष्मकटाक्षितः ॥ ४ ॥
विशदविशदप्राज्यप्राज्यप्रवारणवारण, हरिणहरिणश्रीदश्रीदप्रबोधनबोधन ।
कमलकमलव्यापव्यापद्दरीतिदरीतिदा, गहनगहनश्रेणीश्रेणी विभाति विभाति च ॥ ५ ॥ (हरिणी०)

अनेन पुष्पाञ्जलिः । ततः—

जय जय देव देवाधिनाथो लसत्सेनया प्रीणितस्वान्तकान्तप्रभ—
प्रतीघबहुलदावनिर्वापणे पावनाभोदवृष्टे विनष्टाखिलाघव्रज ।
मरणभयहराधिकध्यानविस्फूर्जितज्ञानदृष्टिप्रकृष्टेक्षणाशसन,
त्रिभुवनपरिवेषनिःशेषनिद्वज नश्लाघ्यकीर्तिस्थितिख्यातिताश प्रभो ॥ १ ॥

इति वृत्तेन् बिम्बाग्रतोऽञ्जलिं बद्ध्वा क्षण ध्यानम् [ शान्तिनाथभगवतः "ॐ ह्रीँ श्रीँ शान्तिनाथाय नमः" मन्त्रः १०८ कृत्वः पठनीयः ] पुनः शक्रस्तवः । पुनः धूप गृहीत्वा—
ऊर्ध्वाधो० अनेन वृत्तेन धूपोत्क्षेपः इति पञ्चविंशतिकुसुमाञ्जलयः प्रक्षिप्यन्ते । तत आरात्रिक मगल—दीपश्च (पूर्वपृष्ठ—१२) । तत आज्ञाहीनं० आवाहन० कीर्तिं श्रियो० आशातनाया० (पूर्वपृष्ठ—२६) ।
इत्यादि पूर्ववत् पठनीयम् ।

प्रथमदिने
मध्याह्ने
करणीय

[एतान्येव कुसुमाञ्जलिकाव्यान्तर्गतविधिकाव्यपञ्चविंशतिरहितानि कुसुमाञ्जलिकाव्यानि पञ्चविंशत्युत्तरशत-संख्यानि । एतत्स्तुतिकुसुमाञ्जलिमहाकाव्यं विद्वद्भिर्भणनीयं परिशीलनीयं व्याख्येयं पठनीयं च ।]
इति प्रथमदिनमध्याह्ने करणीयः विधिः । [ आचारदिनकर पृ० १८५ तः पृ० १९५ पर्यंत ]

ધૂપ અંગેનો શ્લોક :—

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्ष-
प्रौढिप्राप्तप्रकर्षक्षितिरुहरसजः क्षोणपापावगाहः ।
धूपोऽकूपारकल्पप्रभवमृतिजराकष्ट-विस्पष्टदुष्ट-
स्फूर्जत्संसारपाराधिगममतिधियां विश्वभर्तुः करोतु ॥ १ ॥

—: २५ कुसुमाञ्जलिविधिमा जोईती वस्तुनी यादी :—

१ चन्दन अर्चन ( चन्दन पूजा )
२ कुंकुम अर्चन ( केसर पूजा )
३ यक्षकर्दम विलेपन ( यक्षकर्दमनी दश वस्तुओ केसर, सुखड, अगर, बरास, कस्तुरी, गोरोचदन, रत्ताजली, काचो हीगळोक, मरचककोल, सोनानो वरक)
४ कर्पूर आरोपण ( कपुर चडाववु )
५ वासक्षेप ( वासक्षेप पूजा )
६ कस्तुरीलेप ( कस्तुरीनो लेप )
७ कालागरु लेप ( कालागरुनो लेप )
८ पुष्पाल्कार अवतरण ( पुष्प अने अलकार उतारवा )
९ स्नपनपीठक्षालन ( स्नात्रपीठने घोवी )
१० बिंबमार्जन ( जिनप्रतिमाने वस्त्रथी साफ करवी )
११ पुष्प-आरोपण ( फूल चढाववा )
१२ फल-ढौकन ( फल मूकवा )
१३ अगरुक्षेप ( अगरु नाखवो )
१४ सयुक्तधूप-उत्क्षेपण ( वधा धूप करवा )
१५ जलपूजा ( जलपूजा करवी )
१६ अक्षत आरोपण ( चोखा चढाववा )
१७ पंचांगरक्षा ( पचांगरक्षामां १ ललाट, २ नयन, ३ हृदय ४ सर्वांग ५ पीठ )
१८ निलुंछनकरण ( लुंछणा करवा )
१९ मालारोपण ( माला चढाववी )
२० अपराधक्षामण ( अपराध खमाववा )
२१ दीपदान ( दीवो करवो )
२२ दर्पण ढौकन ( दर्पण धरवु )
२३ अधिकृतजिनस्तोत्र ( मुख्य जिननु स्तोत्र बोलवु )
२४ विज्ञप्तिका ( विनति करवी )
२५ क्षणध्यानम् ( क्षणवार ॐ ह्रीँ श्रीँ शान्तिनाथाय नम १०८ वार ध्यान धरवु )

—०—

# अथ सप्तपीठ-पूजनम् ॥

( द्वितीयदिने प्रातः पीठपूजनात् पूर्वं पृष्ठ २ तः पृष्ठ ८ " इति जिनपूजनम् " तत् पर्यंतं पूजनविधि विधाय तत्पश्चात् अग्रे सप्तपीठ-पूजनविधिः करणीयः ) ततो जिनाग्रे स्वर्णरूप्यताम्रकांस्यमयानि वा सप्तपीठानि न्यसेत् । तत्र-

प्रथमपीठे- पञ्चपरमेष्ठिस्थापनमक्षतैस्तिलकैर्वा मालाक्रमेण कार्यम् ॥

द्वितीयपीठे- दिक्क्रमेण दिक्पालस्थापनं तथैव ॥

तृतीयपीठे- चतुर्दिक्षु त्रयं त्रयं कृत्वा द्वादशराशिस्थापनम् ॥

चतुर्थपीठे- चतुर्दिक्षु सप्तकं सप्तकं कृत्वाऽष्टाविंशतिनक्षत्रस्थापनम् ॥

पञ्चमपीठे- दिक्क्रमेण क्षेत्रपालवर्जितं ग्रहस्थापनं विधेयम् ॥

षष्ठपीठे- चतुर्दिक्षु चतुष्कं चतुष्कं कृत्वा षोडशविद्यादेवीस्थापनम् ॥

सप्तमपीठे- गणपति-कार्तिकेय-क्षेत्रपाल-पुरदेवता-चतुर्णिकायदेवस्थापनम् ॥

ततः पूर्ववत् परमेष्ठिपूजनम् ॥ तथाहि प्रथमं पुष्पाञ्जलिं गृहीत्वा—

अर्हन्त ईशाः सकलाश्च सिद्धा आचार्यवर्या अपि पाठकेन्द्राः ।
मुनीश्वराः सर्वसमीहितानि कुर्वन्तु रत्नत्रययुक्तिभाजः ॥ १ ॥

इत्यर्हदादिषु पुष्पाञ्जलिक्षेपः ॥ ततोऽर्घ्यपाद्यादि प्रगुणीकृत्यार्हतः प्रति–

विश्वाग्रस्थितिशालिनः समुदयाः संयुक्तसन्मानसा,– नानारूपविचित्रचित्ररचिताः सत्रासितातर्द्विपः ।
सर्वार्थप्रतिभासनैककुशलाः सर्वैर्नताः सर्वदाः, श्रीमत्तीर्थकरा भवन्तु भविना व्यामोहविच्छित्तये ॥ १ ॥

ॐ नमो भगवद्भ्योऽर्हद्भ्यः सुरासुरनरपूजितेभ्यस्त्रिलोकनायकेभ्योऽष्टकर्मनिर्मुक्तेभ्योऽष्टादशदोषरहितेभ्यः चतुस्त्रिंशदतिशययुक्तेभ्यः पञ्चत्रिंशद्वचनगुणसहितेभ्यो भगवन्तोऽर्हन्तः सर्वविदः सर्वगा इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु स्वाहा, इदमर्घ्यं पाद्य बलिं चरु गृह्णन्तु गृह्णन्तु सन्निहिता भवन्तु भवन्तु स्वाहा, जल गृह्णन्तु २ स्वाहा, गन्ध गृ० पुष्प गृ० अक्षतान् गृ० फलानि गृ० मुद्रा गृ० धूप गृ० दीप गृ० नैवेद्यं गृ० सर्वोपचारान् गृ० शान्तिं कुर्वन्तु २, तुष्टिं कु० पुष्टिं कु० ऋद्धिं कु० वृद्धिं कु० सर्वसमीहित कुर्वन्तु कुर्वन्तु स्वाहा ॥ स्वाहा सर्वत्र योज्यम् ॥

इत्येतैर्मन्त्रैराह्वान सन्निहितकरण जल–गन्ध–पुष्पाक्षत–फल–धूप–दीप–नैवेद्यदानम्, अर्घ्यपाद्यदान च ॥ इत्यर्हत्पूजाक्रमः ॥ ततः सिद्धान् प्रति–

यद्दीर्घकालसुनिकाचितबंधनद्ध–मष्टात्मक विषमचारमभेद्यकर्म ।
तत्संनिहत्य परम पदमापि यैस्ते, सिद्धा दिशन्तु महतीमिह कार्यसिद्धम् ॥ १ ॥

ॐ नमः सिद्धेभ्योऽशरीरेभ्यो व्यपगतकर्मबन्धनेभ्यश्चिदानन्दमयेभ्योऽनन्तवीर्येभ्यो भगवन्तः सिद्धा इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु० शेषं पूर्ववत् ॥ इति सिद्धपूजाक्रमः ॥ तत आचार्यान् प्रति—

विश्वस्मिन्नपि विष्टपे दिनकरीभूतं महातेजसा, यैरर्हद्भिरितेषु तेषु नियतं मोहान्धकारं जगत् ।
जातं तत्र च दीपतामविकलां प्रापुः प्रकाशोद्गमादाचार्याः प्रथयन्तु ते तनुभृतामात्मप्रबोधोदयम् ॥ १ ॥

ॐ नम आचार्येभ्यो विश्वप्रकाशकेभ्यो द्वादशांगगणिपिटकधारिभ्यः पञ्चाचाररतेभ्यो भगवन्त आचार्या इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु० शेषं पूर्ववत् ॥ इत्याचार्यपूजा ॥ तत उपाध्यायान् प्रति—

पाषाणतुभ्योऽपि नरो यदीय—प्रसादलेशाल्लभते सपर्याम् ।
जगद्धितः पाठकसंचयः स कल्याणमालां वितनोत्वभीक्ष्णम् ॥ १ ॥

ॐ नम उपाध्यायेभ्यो निरंतरद्वादशांगपठनपाठनरतेभ्यः सर्वजन्तुहितेभ्यो भगवन्त उपाध्याया इह शान्तिकपूजामहोत्सवे आगच्छन्तु० शेषं पूर्ववत् ॥ इत्युपाध्यायपदपूजा ॥ ततः साधून् प्रति—

संसारनीरधिमवेत्य दुरन्तमेव यैः संयमाख्यवहनं प्रतिपन्नमाशु ।
ते साधकाः शिवपदस्य जिनाभिषेके साधुव्रजा विरचयन्तु महाप्रबोधम् ॥ १ ॥

ॐ नमः सर्वसाधुभ्यो मोक्षमार्गसाधकेभ्यः शान्तेभ्योऽष्टादशसहस्रशीलांगधारिभ्यः पञ्चमहाव्रतनिष्ठितेभ्यः

परमहितेभ्यो भगवन्तः साधवः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु० शेष पूर्ववत् इति साधुपूजा ॥

अथ पञ्चपरमेष्ठिना परिपिण्डितपूजा—

ॐ नमः सर्वतीर्थकरेभ्यः सर्वगतेभ्यः सर्वदर्शिभ्यः सर्वहितेभ्य. सर्वदेभ्यः ॐ नमो भगवद्भ्यः सिद्धेभ्यो भगवद्भ्य आचार्येभ्यो भगवद्भ्य उपाध्यायेभ्यो भगवद्भ्यः साधुभ्यो भगवन्तः पञ्चपरमेष्ठिनः इह शान्तिकपूजा-महोत्सवे सातिशयाः सप्रातिहार्याः सवचनगुणाः सज्ञानाः ससघा. सदेवासुरनराः प्रसीदन्तु इदमर्घ्यं पाद्य गृह्णन्तु २, गन्ध गृ० २, पुष्पं गृ० २, धूप गृ० २, दीप गृ० २, अक्षतान् गृ० २, नैवेद्य गृ० २, सर्वोपचारान् गृ० २, शान्ति कुर्वन्तु २, तुष्टि कु० २, पुष्टि कु० २, ऋद्धि कु० २, वृद्धि कु० २, सर्वसमीहितं कुर्वन्तु कुर्वन्तु स्वाहा ॥ अनेन पञ्चपरमेष्ठिना परिपिण्डितपूजा ॥ एव पचपरमेष्ठिपूजनं निधाय पञ्चहस्तवस्त्राच्छादनम् ॥ इत्याद्य-पीठम् ॥ ( आचार दि० पृ० १५९ तमे )।

---

अथ द्वितीयपीठे दशदिक्पालपूजनम् ॥ पुष्पाञ्जलिं गृहीत्वा वृत्त पठेत्—

दिक्पालाः सकला अपि प्रतिदिशं स्व स्व बलं वाहनं, शस्त्रं हस्तगत विधाय भगवत्स्नात्रे जगद्दुर्लभे ।
आनन्दोल्लणमानमा बहुगुण पूजोपचारोच्चय, सन्ध्याय प्रगुण भवन्तु पुरतो देवस्य लब्धासनाः ॥ १ ॥

अनेन वृत्तेन दिक्पालवलये पुष्पाञ्जलिक्षेप । तत इन्द्र प्रति—

द्वितीयदिने
प्रात
करणीय
॥ ५९ ॥

सम्यक्त्वस्थिरचित्तचित्रितककुप्कोटीरकोटीपटत्, सङ्घस्योत्कटराजपट्टपटुतासौभाग्यभाग्याधिकः ।
दुर्लक्षप्रतिपक्षकक्षदहनज्वालावलीसंनिभो, भास्वद्भाल निभालयेन्द्र भगवत्स्नात्राभिषेकोत्सवम् ॥ १ ॥

ॐ वषट् नमः श्रीइन्द्राय तप्तकांचनवर्णाय पीताम्बराय ऐरावणवाहनाय वज्रहस्ताय द्वात्रिंशल्लक्षविमानाधिपतये अनन्तकोटिसुरसुरांगनासेवितचरणाय सप्तानीकेश्वराय पूर्वदिगधीशाय श्रीइन्द्र सायुध सवाहन सपरिच्छद इह शान्तिक-पूजामहोत्सवे आगच्छ आगच्छ, इदमर्घ्यं पाद्यं बलिं चरुं गृहाण गृहाण, सन्निहितो भव भव स्वाहा, जलं गृहाण गृहाण, गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृहाण गृहाण, शान्ति कुरु कुरु,तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० कुरु कुरु सर्वसमीहितानि देहि देहि स्वाहा । इतीन्द्रपूजाक्रमः । अग्निं प्रति—

नीलाभाच्छादलीलाललितविलुलितालंकृतालंभविष्णु—स्फूर्जद्रोचिष्णुरोचिर्निचयचतुरतावंचितोदंचिदेहः ।
नव्यांभोदप्रमोदप्रमुदितसमदाकर्णविद्वेषिधूम—ध्वान्तध्वंसिध्वजश्रीरधिकतरधियं हव्यवाहो धिनोतु ॥ २ ॥

ॐ रें नमः श्री अग्नये सर्वदेवमुखाय प्रभूततेजोमयाय आग्नेयदिगधीश्वराय कपिलवर्णाय छागवाहनाय नीलाम्बराय धनुर्बाणहस्ताय श्रीअग्ने सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ २ ॥ यमं प्रति—

दैत्यालीमुंडखंडीकरणसुडमरोदंडशुंडप्रचंड—दोर्दंडाडंबरेण प्रतिहरदनुगं भापयन् विघ्नजातम् ।
कालिन्दीनीलमीलत्सलिलविलुलितालंकृतोद्यल्लुलाय—न्यस्तांघ्रिर्धर्मराजो जिनवरभवने धर्मबुद्धिं ददातु ॥ ३ ॥

## બૃહત્સ્નાત્ર સામગ્રી

(૧) ત્રણ કુસુમાંજલિ. (૨) આઠ સ્નાત્ર– ૧ ક્ષીર, ૨ દધિ, ૩ ઘી, ૪ શેરડીનો રસ, ૫ જલ, ૬ સહસ્રમૂલ, ૭ શતમૂલ, ૮ સર્વૌષધિ. (૩) ધૂપ. (૪) શક્રસ્તવ, (૫) અભિષેકના ૧૯ કાવ્યો. (૬) છેલ્લું કાવ્ય બોલી ૧૦૮ અભિષેક કરવા.

૧ કસ્તૂરિકા વિલેપન. ૨ પુષ્પમાલા, ૩ આભૂષણ–મુગટ–હાર વગેરે. ૪ ફલઢૌકન, ૫ અક્ષતઢૌકન, ૬ જલકલશ ઢૌકન, ૭ ધૂપ, ૮ દીપ, ૯ ષટ્રસનૈવેદ્ય, ૧૦ સર્વધાન્યઢૌકન. ૧૧ સર્વવેસવાર ( સુંઠ, મરી, મઠ ), ૧૨ સર્વૌષધિ ઢૌકન, ૧૩ તાંબુલ ઢૌકન, ( તાણુલ નંગ ૭ ) ૧૪ વસ્ત્ર પૂજા, ૧૫ સુવર્ણ રૌપ્ય–મુદ્રાપૂજન, ૧૬ કુસુમાંજલી પૂર્વક અષ્ટમંગલપૂજન ૧૭ પુષ્પમાલા જિનબિંબોપરિ સ્થાપન, ૧૮ આરતી, મંગલદીવો, આજ્ઞાહીનં૦ પુષ્પારોપણ, વિસર્જન.

## ॥ વિસર્જન વિધિ ॥

પીઠ વિસર્જન–પીઠ પાસે જઇને “યાન્તુ દેવગણાઃ સર્વે, પૂજામાદાય મામકીમ્; સિદ્ધિં દત્વા ચ મહતીં, પુનરાગમનાય ચ ॥૧॥” હાથ જોડીને આ વાકય દરેક પીઠ આગલ બોલવું. મંત્ર— ૐ વિસર વિસર સ્વસ્થાનં ગચ્છ ગચ્છ સ્વાહા ” એમ બોલીને કુસુમાંજલિ પીઠ ઉપર નાખવી.

## अपराधक्षामणम्

कीर्तिं श्रियो राज्यपदं सुरत्वं, न प्रार्थये किंचन देवदेव ।
मत्प्रार्थनीयं भगवन् प्रदेय, त्वद्दासता मा नय सर्वदापि ॥ १ ॥

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता ।
क्षमस्व तं नाथ कुरु प्रसाद, प्रायो नराः स्युः प्रचुरप्रमादाः ॥ १ ॥

आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत्कृतम् ।
तत्सर्वं कृपया देवाः क्षमन्तु परमेश्वराः ॥ १ ॥

आह्वाहनं न आनामि न जानामि विसर्जनम् ।
पूजा चैव न आनामि त्वमेव शरणं मम ॥ २ ॥

आशीर्वाद-श्लोकः—

सौभाग्यं भाग्यमग्र्यं किल विमलकुले सम्भवश्चापि सपत्, लक्ष्मीरारोग्यमगे सखिसुतदयितान्धुवर्गप्रवृद्धिः ।
सर्वस्तात् सारकल्पद्रुमजिनचरणेन्दीवरोद्यत्प्रसादात्, सौख्यं स्वर्गापवर्गप्रभवमपि जयो रम्यमैश्वर्यमाशु ॥ १ ॥

॥ इति श्री अर्हन्महापूजन-विधिः समाप्तः ॥

## ત્રિકોણકુંડ રચના




ચોરસ ( ૨૪ આગળ ) ક્ષેત્રફળના ૩ ભાગ કરવા ( ૮ આગળ ) એક ભાગ આગળ વધારવો ( તૃતીયાશ ૩૨ આગળ, )ચોરસ (૨૪ આગળ) ક્ષેત્રફળના ૪ ભાગ કરવા તેમાનો એક એક ભાગ ( ૬-૬ આગળ ચતુર્થાંસ ) પડખે બે બાજુ વધારવો ( ૩૬ આગલ ) અને ત્રિકોણ કરવુ ઇતિ

પ્રકૃતિ 'ક્ષેત્ર' ૨૪ આગળ, તેના આઠ ભાગ કરવા તેમાથી '૫' ભાગ એટલે '૧૫' આગળ જેટલુ જમીનમા ખોદવુ જમીન ઉપર ઉંચાઈમા ૯ આગળની ૩ મેખલા કરવી, (પ્રથમ એક આગળ પુષ્પકઠ કરવો ) ઉપરથી પહેલી મેખલા ૪ આગળ ઉંચી અને ૪ આગળ પહોળી કરવી તે પછી મધ્યમા બીજી મેખલા ૩ આગળ ઉંચી, ૩ આગળ પહોળી કરવી, ત્રીજી મેખલા નીચેની ૨ આગળ ઉંચી અને ૨ આગળ પહોળી બનાવવી ॥ ઇતિ ॥

યોની વ્યાસની અર્ધા વ્યાસ ૨૪ આગળ તેની અર્ધી-૧૨ આગળ લાંબી કરવી, ૮ આગળ પહોળી, ૧૨ આગળ ઉંચી કરવી અને નીચેથી ભારી, ઉપર એક આગળ સંકલિત અને જમીનના મૂળ સહિત છિદ્રની નાળ ૧૨

सुवृष्टाः सन्तु जलदाः, सुवाताः सन्तु वायवः ।
सुनिष्पन्नास्तु पृथिवी, सुस्थितोऽस्तु जनोऽखिलः ॥१॥

ॐ तुष्टि,-पुष्टि,-ऋद्धि,-वृद्धि,-सर्वसमीहितवृद्धिर्भूयात्.

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं, सर्वत्र सुखीभवन्तु लोकाः ॥१॥

सर्वेऽपि सन्तु सुखिनः, सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत् ॥ २ ॥

जगत्यां सन्ति ये जीवाः स्वस्वकर्मानुसारिणः ।
ते सर्वे वांछितं स्वं स्वं, प्राप्नुवन्तु सुखं शिवम् ॥ ३ ॥

इति शान्तिदंडकं जलधाराभिमन्त्रसहितं त्रिः पठेत् ततः शान्तिकलशजलेन

शान्तिककारयितार सपरिवारमभिषिंचेत् सर्वत्र गृहं ग्रामं च । दिक्पालादि सर्व-देवत-विसर्जनं यान्तु देव० इत्यादि उक्त्वा पूर्ववत् ॥ इति शान्तिकम् ॥

॥ अथ शान्तिक—फलम् ॥

सर्वत्र गृहिसंस्कारे, सूति–मृत्यु-विवर्जिते, प्रतिष्ठासु च सत्रासु, षण्मास्या वत्सरेऽथवा ॥१॥
आरब्धे च महाकार्ये, जातेऽप्युत्पातदर्शने, रोग-दोषे महाभीतौ, संकटोपगमेऽपि च ॥२॥
गतभूम्यादिलाभे च, महापापस्य संभवे। कारायं शान्तिक नूनं, धीमद्भिर्गृहमेधिभिः ॥३॥
दुरितानि क्षयं यान्ति, रोगदोषौ च शाम्यतः। दुष्टदेवासुरा मर्त्याः सपत्ना स्युः पराङ्मुखाः ॥४॥
सौमनस्यं शुभं श्रेयः, तुष्टिः पुष्टिर्विवर्धते। समीहितस्य सिद्धिःस्याच्छान्तिकस्यविधानतः ॥५॥
इति सामान्यशान्तिकफलं, शान्तिकान्ते साधुभ्यो विपुलवस्त्रपात्रभोजनोपकरणदानं दद्यात्. अत्र गृहे ( अस्मिन् जंबुद्वीपे० इत्यादि ) कथिते गृहाधिपस्य नामोच्चारं कुर्यात्. ( आचार-दिनकर पृ० २२० तः २२५ ) इति शान्तिककार्ये विशेष-पूजा-विधानम्।

# ત્રિકોણકુંડ રચના




ચોરસ ( ૨૪ આંગળ ) ક્ષેત્રફળના ૩ ભાગ કરવા. ( ૮ આંગળ ) એક ભાગ આગળ વધારવો. ( તૃતીયાંશ ૩૨ આંગળ, )ચોરસ (૨૪ આંગળ) ક્ષેત્રફળના ૪ ભાગ કરવા. તેમાંનો એક એક ભાગ ( ૬–૬ આંગળ ચતુર્થાંસ ) પડખે બે બાજુ વધારવો ( ૩૬ આંગલ ) અને ત્રિકોણ કરવું. ઇતિ.

પ્રકૃતિ ‘ક્ષેત્ર’ ૨૪ આંગળ, તેના આઠ ભાગ કરવા તેમાંથી ‘૫’ ભાગ એટલે ‘૧૫’ આંગળ જેટલું જમીનમાં ખોદવું જમીન ઉપર ઉંચાઇમાં ૯ આગળની ૩ મેખલા કરવી, (પ્રથમ એક આંગળ પુષ્પકંઠ કરવો.) ઉપરથી પહેલી મેખલા ૪ આંગળ ઉંચી અને ૪ આંગળ પહોળી કરવી. તે પછી મધ્યમાં બીજી મેખલા ૩ આંગળ ઉંચી, ૩ આંગળ પહોળી કરવી, ત્રીજી મેખલા નીચેની ૨ આંગળ ઉંચી અને ૨ આંગળ પહોળી બનાવવી. ॥ ઇતિ ॥

યોની વ્યાસની અર્ધી. વ્યાસ ૨૪ આંગળ તેની અર્ધી-૧૨ આંગળ લાંબી કરવી, ૮ આંગળ પહોળી, ૧૨ આંગળ ઉંચી કરવી અને નીચેથી ભારી, ઉપર એક આંગળ સંકલિત અને જમીનના મૂળ સહિત છિદ્રની નાળ ૧૨

ॐ सर्वेऽपि तपोधन-तपोधनी-श्रावक-श्राविकाभवाश्चतुर्णिकायदेवाः सुपूजिताः सुप्रीता भवन्तु, शान्ति कुर्वन्तु स्वाहा

ॐ अत्रैव देश-नगर-ग्राम-गृहेषु दोष-रोग-वैर-दौर्मनस्य-दारिद्र्य-मरक-वियोग-दुःख-कलहोपशमेन शान्तिर्भवतु दुर्मनोभूत-प्रेत-पिशाच-यक्ष-राक्षस-वैताल-झोटिंक-शाकिनी-डाकिनी-तस्करातताियिना प्रणाशेन शान्तिर्भवतु भूकम्प-परिवेष-विद्युत्पातोल्कापात-क्षेत्र-देश-निर्घात-सर्वोत्पात-दोपशमनेन शान्तिर्भवतु अकाल-फल-प्रसूति-वैकृत्य-पशुपक्षि-वैकृत्याकालदुश्चेष्टा-प्रमुखोपप्लवोपशमनेन शान्तिर्भवतु ग्रहगणपीडित-राशिनक्षत्रपीडो-पशमनेन शान्तिर्भवतु जाधिक-नैमित्तिकाकस्मिक-दुःशकुन-दुःस्वप्नोपशमनेन शान्ति-र्भवतु कृतक्रियमाण—पापक्षयेण शान्तिर्भवतु. दुर्जन—दुष्ट—दुर्भाषक—दुश्चिन्तक-दुराराध्य—शत्रूणा दुरापगमनेन शान्तिर्भवतु

उन्मृष्ट-रिष्ट-दुष्ट-ग्रह-गति,-दुःस्वप्न-दुर्निमितादि, संपादित-हित-संपन्नामग्रहण,

राशयस्सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ सूर्य–चंद्रांगारक–बुध–गुरु–शुक्र–शनैश्चर–राहु–केतुरूपाः ग्रहाः सुपूजिताः प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ इन्द्राग्नि-यम-निर्ऋति-वरुण-वायु-कुबेरेशान-नाग-ब्रह्मरूपा दिक्पालाः सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ गणेश-स्कन्द-क्षेत्रपाला देश-नगर-ग्रामदेवताः सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ अन्येऽपि क्षेत्रदेवा जलदेवा भूमिदेवाः सुपूजिताः सुप्रीताः भवन्तु स्वाहा. शान्ति कुर्वन्तु स्वाहा.

ॐ अन्याश्च पीठोपपीठक्षेत्रोपक्षेत्रवासिन्यो देव्यः सपरिकराः सवटुकाः सुपूजिताः सुप्रीता भवन्तु (स्वाहा) शान्ति कुर्वन्तु स्वाहा.

सायुधा. सवाहना. सपरिकरा. प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ रोहिणी-प्रज्ञप्ति-वज्रशृंखला-वज्राकुशी-अप्रतिचक्रा-पुरुषदत्ता-कालि-महाकालि-गौरी-गान्धारी-सर्वास्त्रा-महाज्वाला-मानवी-वैरोट्या--अच्छुप्ता-मानसी-महामानसीरूपाः षोडशविद्यादेव्यः सुपूजिताः प्रीताः शान्तिकारिण्यो भवन्तु स्वाहा

ॐ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुपरमेष्ठिन सुपूजिताः प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ अश्विनी-भरणी-कृत्तिका-रोहिणी-मृगशीर-आर्द्रा-पुनर्वसु--पुष्य- आश्लेषा-मघा-पूर्वाफाल्गुनी-उत्तराफाल्गुनी-हस्त-चित्रा-स्वाति-विशाखा-अनुराधा-ज्येष्ठा-मूल-पूर्वाषाढा-उत्तराषाढा-अभिजित् श्रवण-धनिष्ठा-शतभिषक्-पूर्वाभद्रपदाउत्तराभद्रपदारेवती-रूपाणि नक्षत्राणि सुपूजितानि प्रीतानि शान्तिकराणि भवन्तु स्वाहा

ॐ मेष-वृष-मिथुन-कर्क-सिंह-कन्या-तुला-वृश्चिक-धनु-मकर-कुंभ--मीनरूपा

तृतीयदिने
प्रात
करणीय

द्‌घोषयन्ति ततस्तत्कृतानुसारेण वयमपि तीर्थंकरस्नात्रकरणानन्तरं शान्तिमुद्‌घोषयामः सर्वे कृतावधानाः सुरासुरनरोरगाः शृण्वन्तु स्वाहा.

ॐ अर्हं नमो नमो जय जय पुण्याहं पुण्याहं, प्रीयन्तां प्रीयन्तां भगवन्तोऽर्हन्तो विमलकेवलास्त्रिलोकपूज्या-स्त्रिलोकोद्योतकरा महातिशया महानुभावा महातेजसो महापराक्रमा महानन्दाः.

ॐ ऋषभ अजित–संभव–अभिनंदन, सुमति–पद्मप्रभ–सुपार्श्व-चन्द्रप्रभ-सुविधि-शीतल–श्रेयांस–वासुपूज्य–विमल–अनंत–धर्म–शांति–कुंथु–अर–मल्लि–मुनिसुव्रत–नमि–नेमि–पार्श्व–वर्धमानान्ता जिना अतीतानागतवर्तमानाः पंचदशकर्मभूमिसंभवा विहरमाणाश्च, शाश्वतप्रतिमागता भवनपतिव्यंतरज्योतिष्क–वैमानिक–भवनसंस्थिताः तिर्यग्लोक–नंदीश्वर-रुचकेषुकार–कुंडल-वैताढ्य-गजदंत-वक्षस्कार–मेरुकृतनिलया जिनाः सुपूजिताः सुस्थिताः शान्तिकरा भवन्तु स्वाहा.

ॐ देवाश्चतुर्णिकाया भवनपति–व्यंतर–ज्योतिष्क-वैमानिकास्तदिन्द्राश्च साप्सरसः

॥ अथ श्रीशान्तिदण्डकः ॥

नमः श्रीशान्तिनाथाय, सर्वविघ्नापहारिणे ।
सर्वलोकप्रकृष्टाय, सर्ववाछितदायिने. ॥१॥

इह हि भरतैरावतविदेहजन्मना, तीर्थंकराणा जन्मसु चतु षष्टिसुरासुरेन्द्राश्च चलितासना विमानघंटाटकारक्षुभिताः प्रयुक्तावधिज्ञानेन, जिन-जन्म-विज्ञान-परमतम-प्रमोद-पूरिताः मनसा नमस्कृत्य जिनेश्वर सकलसामानिकागरक्षपार्षद्यत्रायस्त्रिंशल्लो-कपालाकनिप्रकीर्णकाभियोगिकसहिताः साप्सरोगणाः सुमेरुशृंगमागच्छन्ति तत्र च सौधर्मेन्द्रेण विधिना करसंपुटानीतास्तीर्थंकरान् पांडुकंबलातिपांडुकंबलारक्तकंबलातिरक्तकं-बलाशिलासु, न्यस्तसिंहासनेषु, सुरेन्द्रक्रोडस्थितान् कल्पितमणिसुवर्णादिमययोजनमु-खकलशोद्गतैस्तीर्थवारिभिः स्नपयन्ति. ततो गीत-नृत्य-वाद्य-महोत्सवपूर्वकं शान्तिमु-

अनेन विम्बं स्नपनपीठादुत्थाप्य यथास्थानं स्थापयेत् । तत —

आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत्कृतम् । तत्सर्वं कृपया देव क्षमस्व परमेश्वर ॥१॥
आह्वानं नैव जानामि न जानामि विसर्जनम् । पूजाविधिं न जानामि प्रसीद परमेश्वर ॥२॥

कीर्तिश्रियो० आशातना या० इत्यादि पठनीयम् । इति पुष्पारोपणम् । तदनन्तरं पूर्वरीत्या आरात्रिकमाङ्गलिकादिकर्मकरणं पूजाकर्मवत् । (आरात्रिकं मंगलदीपश्च) तदनन्तरं चैत्यवन्दनं साधुवन्दनं च । इति बृहत्स्नात्रम्* ॥

एवं विधिना स्नात्रविधिनान्तरं स्नात्रोदकं सर्वं ग्राह्यं सर्वतीर्थजलं च संमील्य विम्बाग्रे सुविलिप्तभूमौ चतुष्किकोपरि न्यस्तस्य यथासंपत्तिकृतस्य, बद्धकंठस्य, मदनफलादिरक्षस्य शान्तिकलशस्य मध्ये निक्षिपेत् । रक्षादि वन्धनं सर्वत्र शान्तिमंत्रेण ततः कलशमध्ये स्वर्णरूप्यमुद्राः पुगफलानि, नालिकेरं च शान्तिमंत्रेण न्यसेत्-ततः शुद्धोदकैरखंडधारया, द्वौ स्नात्रकारौ स्नात्रकलशं पूरयतः । उपरि छद्याकारेण (छदाधारेण) आकलशमूलावलम्बि सदशवस्त्रं बध्नीयात । गुरुश्च कुशेन तां जलधारां, शान्तिकलशे निपतन्तीं, शान्तिदंडकं पठन्नभिमंत्रयति । शान्तिदंडको यथा—

*नवप्रतिष्ठिते विम्बे प्रतिष्ठास्वखिलास्वपि शान्तिके पौष्टिके चैव पर्वसु प्रौढकर्म्मसु ॥१॥
तीर्थे नव्यासु यात्रासु प्राप्ते विम्बे नवेपि च, बृहत्स्नात्रविधिर्योज्यः स्याद्वादोऽन्यत्र कर्मणि ॥२॥
इति बृहत्स्नात्रविध्युपयोगः ॥ आचारदिनकर पृ० १८९ ॥

सेवा तनोति पुरतस्तव मीनयुग्म श्राद्धैः पुरो विलिखितोरुनिजाङ्गयुक्त्या ॥६॥

मत्स्ययुग्म लिखेत् । (७) अथ स्वस्तिकलेखनम्—

स्वस्तिश्रीभूगगननागविष्टपे—पूदित जिनवरोदयेक्षणात् ।
स्वस्तिक तदनुमानतो जिनवरस्याग्रतो बुधजनैर्विलिख्यते ॥७॥

स्वस्तिक लिखेत् । (८) अथ नन्द्यावर्त्तलेखनम्—

त्वत्सेवकाना जिननाथ दिक्षु सर्वासु सर्वे निधय. स्फुरन्ति ।
अतश्चतुर्द्धा नवकोणनन्द्या—वर्त्त. सता वर्त्तयता सुखानि ॥८॥

नन्द्यावर्त्त लिखेत् । ततोऽष्टमङ्गलानि गन्ध—पुष्प—फल—पक्वान्नादिभिः पूजयेत् । ततः पुष्पमाला गृहीत्वा—
दर्पणभद्रासनवर्द्धमान—पूर्णघटमत्स्ययुग्मैश्च । नन्द्यावर्त्तश्रीवत्सविस्फुटस्वस्तिकैर्जिनार्चास्तु ॥१॥

अनेन वृत्तेन जिनबिम्बोपरि पुष्पमाला न्यसेत् । तदनन्तर पुष्प गृहीत्वा—

देवेन्द्रैः कनकाद्रिमूर्धनि जिनस्नात्रेण गन्धार्पण, पुष्पैर्भूपणवस्त्रमङ्गलगणैः सपूज्य मातुः पुनः ।
आनीयान्यत एवमत्र भविका बिम्ब जगत्स्वामिन—स्तत्कृत्यानि समाप्य कल्पितमत. मभ्यापयत्यास्पदम् ॥१॥

जिनेन्द्रपादैः परिपूज्य पुष्टै-रतिप्रभावैरपि सन्निकृष्टम् ।
भद्रासनं भद्रकरं जिनेन्द्र-पुरो लिखेन्मङ्गलसत्प्रयोगम् ॥२॥

पूर्ववत् भद्रासनं लिखेत् । (३) अथ वर्द्धमानसंपुटलेखनवृत्तम्—

पुण्यं यशःसमुदयः प्रभुता महत्त्वं सौभाग्यधीविनयशर्ममनोरथाश्च ।
वर्द्धन्त एव जिननायक ते प्रसादात् तद्वर्द्धमानयुगसंपुटमादधानः ॥३॥

वर्द्धमानयुगसंपुटं लिखेत् । (४) पुनः पूर्णकलशालेखनम्—

विश्वत्रये च स्वकुले जिनेशो व्याख्यायते श्रीकलशायमानः ।
अतोऽत्र पूर्णकलशं लिखित्वा जिनार्चनाकर्म कृतार्थयामः ॥४॥

पूर्णकलशं लिखेत् । (५) अथ श्रीवत्सलेखनम्—

अन्तः परमं ज्ञानं यद् भाति जिनाधिनाथहृदयस्य । तच्छ्रीवत्सव्याजात् प्रकटीभूतं वहिर्वन्दे ॥५॥

श्रीवत्सं लिखेत् । (६) अथ मत्स्ययुग्मलेखनम्—

त्वद्वध्यपञ्चशरकेतनभावक्लृप्तं कर्त्तुं मुधा भुवननाथ निजापराधम् ।

ततस्तदनुकारेण साम्प्रतं श्राद्धपुङ्गवाः । कुर्वन्ति वसनैः पूजां त्रैलोक्यस्वामिनोऽग्रतः ॥२॥

इति वृत्तद्वयेन बिम्बस्य वस्त्रपूजा । ततः सुवर्णरूप्यमुद्रा गृहीत्वा—

सुवर्णमुद्रामणिभिः कृतास्तु पूजा जिनस्य स्नपनावसाने ।
अनुष्ठिता पूर्वसुराधिनाथैः सुमेरुशृङ्गे धृतभावशुद्धैः ॥१॥

अनेन वृत्तेन सुवर्णरूप्यटङ्कमुद्रामणिभिर्बिम्बस्याङ्गपूजा । ततो जिनबिम्बाग्रतो विस्तीर्णश्रीपर्णिपीठं अन्योऽन्यसमकाष्ठपीठं वा न्यस्य भूमिं वा शुद्धगोमयेन समारचय्य पुष्पाञ्जलिं गृहीत्वा—

मङ्गलं श्रीमदर्हन्तो, मङ्गलं जिनशासनम् । मङ्गलं सकलः सङ्घो, मङ्गलं पूजका अमी ॥१॥

इति ( अष्टमंगल ) पीठोपरि समारचितभूमौ वा पुष्पाञ्जलिक्षेपः । (१) ततो दर्पणालेखनसामग्री गृहीत्वा—

आत्मालोकविधौ जनोऽपि सकलस्तीव्रं तपो दुश्चरं, दानं ब्रह्म परोपकारकरणं कुर्वन् परिस्फूर्जति ।
सोऽयं यत्र सुखेन राजति स वै तीर्थाधिपस्याग्रतो, निर्मेयः परमार्थवृत्तिविदुरैः सज्ज्ञानिभिर्दर्पणम् ॥१॥

अनेन वृत्तेन चन्दनमयं वा स्वर्णरूप्ययवमयं वा तन्दुलमयं वा जिनबिम्बाग्रे दर्पणं लिखेत् । (२) ततो भद्रासनालेखनम्—

शुंठीकणामरिचरामठजीरधान्य-श्यामासुराप्रभृतिभिः पटुवेसवारैः ।
संढौकनं जिनपुरो मनुजैर्विधीय-मानं मनांसि यशसा विमलीकरोतु ॥१॥

इति जिनाग्रे सर्ववेसवारढौकनम् । ततः सर्वौपधिं गृहीत्वा-

उशीरवटिकाशिरोज्ज्वलनचव्यधात्रीफलै-र्वलासलिलवत्सकैर्घनविभावरीवासकैः ।
वचावरविदारिकामिशिशताह्वयाचन्दनैः, प्रियंगुतगरैर्जिनेश्वरपुरोऽस्तु मे ढौकनम् ॥१॥

इति जिनाग्रे सर्वौपधिढौकनम् । ततस्ताम्बूलं गृहीत्वा-

भुजङ्गवल्लीछदनैः सिताभ्र-कस्तुरिकैलासुरपुष्पमिश्रैः ।
सजातिकोशैः सममेव चूर्णै-स्ताम्बूलमेवं तु कृतं जिनाग्रे ॥१॥

इति जिनाग्रे ताम्बूलढौकनम् । ततो वस्त्रं गृहीत्वा-

सुमेरुशृंगे सुरलोकनाथः स्नात्रावसने प्रविलिप्य गन्धैः ।
जिनेश्वरं वस्त्रचयैरनेकै-राच्छादयामास निषक्तभक्तिः ॥१॥

या धूपपूजा देवेन्द्रैः स्नात्रानन्तरमादधे । जिनेन्द्रस्यास्मदुत्कर्षा-दस्तु स्नात्रमहोत्सवे ॥२॥

इति वृत्तद्वयेन धूपोत्क्षेपणम् । ततो दीप गृहीत्वा-

अन्तर्ज्योतिर्द्योतितो यस्य कायो यत्सस्मृत्या ज्योतिरुत्कर्षमेति ।
तस्याभ्यासे निर्मित दीपदान लोकाचारख्यापनाय प्रभाति ॥१॥

या दीपमाला देवेन्द्रैः सुमेरौ स्वामिनः कृता । स्नात्रान्तर्गतमस्माकं विनिहन्तु तमोभरम् ॥२॥

इति वृत्तद्वयेन दीपदानम् । ततो ( षट्रस ) नैवेद्य गृहीत्वा--

ओदनैर्विविधैः शाकैः पक्वान्नै, षड्रसान्वितैः । नैवेद्यैः सर्वसिद्ध्यर्थं जायता जिनपूजनम् ॥१॥

इति नैवेद्यढौकनम् । ततो गोधूमादिसर्वधान्य गृहीत्वा-

गोधूमतन्दुलतिलैर्हरिमन्थकैश्च मुद्गाढकीयवकलायमकुष्टकैश्च ।
कुल्मापनक्षवरचीनकदेवधान्यै-र्मर्त्यैः कृता जिनपुरः फलदोपदास्तु ॥१॥

इति जिनाग्रे सर्वधान्यढौकनम् । ततः सर्ववेपनार गृहीत्वा-

इति वृत्तद्वयेन विम्बस्य भूपणपरिधानम् । ततः फलानि गृहीत्वा—

सन्नालिकेरफलपूररसालजम्बू—द्राक्षापरूपकसुदाडिमनागरङ्गैः ।
वातामपूगकदलीफलजंभमुख्यैः श्रेष्ठैः फलैर्जिनपतिं परिपूजयामः ॥१॥

यत्कृतं स्नात्रपर्यन्ते सुरेन्द्रैः फलढौकनम् । तदिहास्मत्करादस्तु यथासम्पत्तिनिर्मितम् ॥२॥

इति वृत्तद्वयेन विम्बाग्रे फलढौकनम् । ततोऽक्षतान् गृहीत्वा—

अखंडिताक्षतैः पूजा या कृता हरिणार्हतः । सास्तु भव्यकरांभोजे—त्र विम्बे विनिर्मिता ॥१॥

इति वृत्तेन विम्बाग्रेऽक्षतढौकनम् । ततो जलभृतकलशं गृहीत्वा—

निर्झरनदीपयोनिधि—वापीकूपादितः समानीतम् । सलिलं जिनपूजाया—मह्नाय निहन्तु भवदाहम् ॥१॥

मेरुशृङ्गे जगद्भर्तुः सुरेन्द्रैर्यज्जलार्चनम् । विहितं तदिह प्रौढ—मातनोत्वस्मदाहृतम् ॥२॥

इति वृत्तद्वयेन विम्बाग्रे जलकलशढौकनम् । ततो धूपं गृहीत्वा—

कर्पूरागरुचन्दनादिभिरलं कस्तूरिकामिश्रितैः, सिल्हाद्यैः सुसुगन्धिभिर्बहुतरैर्धूपैः कृशानूद्गतैः ।
पातालक्षितिगोनिवासिमरुतां संप्रीणकैरुत्तमै—र्धूमाक्रान्तनभस्तलैर्जिनपतिं संपूजयामोऽधुना ॥१॥

मेरुशृंगे च यत्स्नात्र, जगद्भर्त्तुः सुरैः कृतम् । बभूव तदिहास्त्वेत-दस्मत्करनिषेकतः ॥१९॥

इति पठित्वा सर्वैः स्नात्रकारैः समकालं जिनबिम्बे कलशाभिषेकः करणीयः । एवमष्टोत्तरशतादिवारान् (१०८ बारान् कलशाभिषेकः) पुनः पुनरन्तिम ( मेरुशृंगे० ) श्लोक पठित्वा जिनस्नात्र करणीयम् । एव स्नात्रविधौ निर्वर्तिते कोमलैर्धूपचूर्णवासितैर्वस्त्रैर्जिनबिम्बं मार्जयेत् । ततः कस्तूरिका–कुङ्कुम–कर्पूर–श्रीखण्डादिविलेपन गृहीत्वा–

कस्तूरिकाकुङ्कमरोहणद्रुः कर्पूरकमोलविशिष्टगन्धम् । विलेपन तीर्थपतेः शरीरं करोतु सङ्घस्य सदा निशुद्धिम् ॥१॥
तुराषाट् स्नात्रपर्यन्ते विदधे यद्विलेपनम् । जिनेश्वरस्य तद्भूया–दत्र बिम्बेऽस्मदादत्तम् ॥२॥
अनेन वृत्तद्वयेन विलेपन बिम्बस्य । ततः पुष्पमालादि गृहीत्वा—

मालतीविचकिलोज्ज्वलमल्लीकुन्दपाटलसुवर्णसुमैश्च । केतकैर्विरचिता जिनपूजा मङ्गलानि सकलानि विदध्यात् ॥१॥
स्नात्र कृत्वा सुराधीशै–र्जिनाधीशस्य वर्ष्मणि । यत्पुष्पारोपण चक्रे तदस्त्वस्मत्करैरिह ॥२॥

इति वृत्तद्वयेन बिम्बे पुष्पमालादिपूजा । ततो मुकुटकुण्डलहारादिभूषणानि गृहीत्वा—

केयूरहारकटकैः पट्टभिः किरीटैः सत्कुण्डलैर्मणिमयीभिरथोर्मिकाभिः ।
बिम्बं जगत्त्रयपतेरिह भूषयित्वा पापोच्चय सकलमेव निकृन्तयामः ॥१॥
या भूषा त्रिदशाधीशैः स्नात्रान्ते मेरुमस्तके । कृता जिनस्य सात्रास्तु भविकैर्भूषणान्विता ॥२॥

इन्द्रादिष्टास्तत आभियोगिकाः कलशगणमथानिन्युः । वेदरसखवसुसंख्यं मणिरजतसुवर्णमृद्रचितम् ॥१२॥

कुंभाश्च ते योजनमात्रवक्त्रा आयाम औनत्यमथैषु चैवम् ।
दशाष्टवार्हत्करयोजनानि द्वित्येकधातुप्रतिपंगगर्भाः ॥ १३ ॥

नीरैः सर्वसरित्तडागजलधिप्रख्यान्यनीराशया—नीतैः सुन्दरगन्धगर्भिततरैः स्वच्छैरलं शीतलैः ।
भृत्यैर्देवपतेर्मणिमयमहापीठस्थिताः पूरिताः, कुंभास्ते कुसुमस्रजां समुदयैः कंठेषु संभाविताः ॥१४॥

पूर्वमच्युतपतिर्जिनेशितुः स्नात्रकर्म विधिवद् व्यधान्महत् ।
तैर्महाकलशवारिभिर्घनैः प्रोल्लसन्मलयगन्धधारिभिः ॥१५॥

चतुर्वृषभशृङ्गोत्थ—धाराष्टकमुदंचयन् । सौधर्माधिपतिः स्नात्रं विश्वभर्तुरपूरयत् ॥ १६ ॥

शेषं क्रमेण तदनन्तरमिन्द्रवृन्दं कल्पासुरर्क्षवननाथमुखं व्यधत्त ।
स्नात्रं जिनस्य कलशैः कलितप्रमोदं प्रावारवेपविनिवारितसर्वपापम् ॥१७॥

तस्मिन् क्षणे वहुलवादितगीतनृत्य—गर्भं महं च सुमनोऽप्सरसो व्यधुस्तम् ।
येनादधे स्फुटसदाविनिविष्टयोग—स्तीर्थकरोऽपि हृदये परमाणुचित्तम् ॥१८॥

तस्मान्निश्चित्य विश्वाधिपतिजनुरयो निर्जरेन्द्रः स्वकल्पान्,
कल्पेन्द्रान् व्यन्तरेन्द्रानपि भवनपतींस्तारकेन्द्रान् समस्तान् ।
आह्वायाह्वाय तेषां स्वमुखभवगिराख्याय सर्वं स्वरूपं,
श्रीमत्कार्त्तस्वराद्रेः शिरसि परिकरालङ्कृतान् प्राहिणोच्च ॥ ५ ॥

ततः स्वयं शक्रसुराधिनाथः प्रविश्य तीर्थङ्करजन्मगेहम् ।
परिच्छदैः सार्द्धमथो जिनाम्बां प्रस्वापयामास वरिष्ठविद्यः ॥ ६ ॥

कृत्वा पञ्चवपूंषि निष्टपपतिः सधारणं हस्तयो–श्छत्रस्योद्वहनं च चामरयुगप्रोद्धासनाचालनम् ।
वज्रेणापि धृतेन नर्त्तनविधिं निर्वाणदातुः पुरो, रूपैः पञ्चभिरेवमुत्सुकमनाः प्राचीनबर्हिर्व्यधात् ॥७॥

सामानिकाङ्गरक्षैरेव परिवारितः सुराधीशः, बिभ्रत् त्रिभुवननाथं प्राप सुराद्रिं सुरगणाढ्यम् ॥८॥

तत्रेन्द्रास्त्रिदशाप्सरःपरिवृता विश्वेशितुः सम्मुखं, मध्यागत्य नमस्कृतिं व्यधुरलं स्वालङ्कृतिभ्राजिताः ।
आनन्दान्ननृतुस्तथा सुरगिरिस्त्रुट्यद्भिराभास्वरैः, शृङ्गैः काञ्चनदानकर्मनिरतो भाति स्म भक्त्या यथा ॥९॥

अतिपाण्डुकम्बलाया महाशिलायाः शशाङ्कधवलायाः । पृष्ठे शशिमणिरचितं पीठमधुर्देवगणवृषभाः ॥१०॥

तत्राधायोत्सङ्गे ईशानसुरेश्वरो जिनाधीशम् । पद्मासनोपविष्टो निबिडां भक्तिं दधौ मनसि ॥११॥

कस्तूरीकर्पूरकुङ्कुममिश्रितेन पाटलादिपुष्पाधिवासितेन निर्मलजलेन पूरणीयाः ततस्तेन निजनिजपरिकरयुताः स्नात्रकराः पूर्वोक्तवेशभृतो जिनोपवीतोत्तरासङ्गयुजो बद्धधम्मिलाः कृतस्नात्रा द्वादशतिलकांकिताः परमेष्ठिमन्त्रं पठित्वा तान् कलशान् स्वस्वकरयोर्गृह्णन्ति । ततस्तेऽपरे च श्राद्धाः स्वस्वाभ्यासानुसारेण जिनस्तुतिपट्पदहारस्तोत्रादि परिवर्त्तयन्ति । पूर्वकविकृतानि जिनाभिषेककाव्यानि पठन्ति । ततः—

नमो अरिहंताणं, नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः ।

पूर्वं जन्मनि विश्वभर्तुरधिकं सम्यक्त्वभक्तिस्पृशः, सूतेः कर्म समीरवारिदमुखं काष्ठाकुमार्यो व्यधुः ।
तत्कालं तविषेश्वरस्य निविडं सिंहासने प्रोन्नतं, वातोद्धूतसमुद्धुरध्वजपटप्रख्यां स्थितिं व्यानशे ॥१॥

क्षोभात्तत्र सुरेश्वरः प्रसृमरक्रोधक्रमाक्रान्तधीः कृत्वालक्तकसिक्तकूर्मसदृशं चक्षुःसहस्रं दधौ ।
वज्रं च स्मरणागतं करगतं कुर्वन् प्रयुक्तावधि, ज्ञानात्तीर्थकरस्य जन्म भुवने भद्रंकरं ज्ञातवान् ॥२॥

नम नम इति शब्दं ख्यापयंस्तीर्थनाथं, स झटिति नमति स्म प्रौढसम्यक्त्वभक्तिः ।
तदनु दिवि विमाने सा सुघोषाख्यघंटाः सुररिपुमदमोघा घातिशब्दं चकार ॥३॥

द्वात्रिंशल्लक्षविमानमंडले तत्समा महाघंटाः । ननदुः सुदुःप्रधर्षा हर्षोत्कर्षं वितन्वन्त्यः ॥४॥

विघ्नसहस्रोपशमन सहस्रनेत्रप्रभावसद्भावम् । दलयतु सहस्रमूल शत्रुसहस्र जिनस्नात्रे ॥ १ ॥

ततः शतमूलमिश्रजलकलश गृहीत्वा—

शतमर्त्यसमानीत शतमूल शतगुण शताख्यं च । शतसख्य वाञ्छितमिह जिनाभिषेके सपदि कुरुतात् ॥१॥

अनेन शतमूलस्नात्रम् । ततः सर्वौषधिमिश्रजलकलश गृहीत्वा—

सर्वप्रत्यूहहर सर्वसमीहितकर विजितसर्वम् । सर्वौषधिमण्डलमिह जिनाभिषेके शुभ ददताम् ॥ १ ॥

अनेन सर्वौषधिस्नात्रम् । ततो धूप गृहीत्वा—

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशा घ्राणहर्षात् प्रौढिप्राप्तप्रकर्षः क्षितिरुहरसजः क्षीणपापावगाहः ।
धूपोऽकूपारकल्पः प्रभवमृतिजराकष्टविस्पष्टदुष्ट—स्फूर्जत्ससारपाराधिगममतिधिया विश्वभर्तुः करोतु ॥१॥

अनेन धूपोत्क्षेपणम् । ततः शक्रस्तवपाठः । ततो यथाशक्त्या स्वर्ण–रूप्य–ताम्र–द्विकयोग–रीति–मृण्मय–कलश-समारचनम् । ते च कलशाः स्थपनकोपरि स्थाप्यन्ते । ततो यथाशक्ति स्नात्रसख्यया अष्टोत्तरशत–चतुःषष्टि–पञ्चविंशति–षोडश–अष्ट–पञ्च–चतुस्त्रि–द्वि–एक–सख्याः ते च चन्दनागरु–कर्पूर–कस्तूरी–कुङ्कुमैः स्वस्तिककरणैश्चतुर्दिक्षु पूज्यन्ते । तत्कण्ठेषु पुष्पमालाभिर्विभूषणम् । ततस्ते कलशाः सर्वतीर्थाहृतेन पूर्वोक्तजलमन्त्रपूतेन चन्दनागरु-

इति पुष्पाञ्जलिक्षेपः । ततः क्षीरभृतं कलशं गृहीत्वा—

भगवन्मनोगुणयशोऽनुकारि—दुग्धाब्धितः समानीतम् । दुग्धं विदग्धहृदयं पुनातु दत्तं जिनस्नात्रे ॥ १ ॥

इति क्षीरस्नात्रम् । ततो दधिभृतं कलशं गृहीत्वा—

दधिमुखमहीध्रवर्णं दधिसागरतः समाहृतं भक्त्या । दधि विदधातु शुभविधिं दधिसारपुरस्कृतं जिनस्नात्रे ॥२॥

इति दधिस्नात्रम् । ततो घृतभृतं कुंभं गृहीत्वा—

स्निग्धं मृदु पुष्टिकरं जीवनमतिशीतलं सदाभिख्यम् । जिनमतवद्धृतमेतत् पुनातु लग्नं जिनस्नात्रे ॥३॥

इति घृतस्नात्रम् । पुनरिक्षुभृतं कलशं गृहीत्वा—

मधुरिमधुरिणविधुरित—सुधाधराधार आत्मगुणवृत्त्या । शिक्षयतादिक्षुरसो विचक्षणौघं जिनस्नात्रे ॥ ४ ॥

इति इक्षुरसस्नात्रम् । ततः शुद्धजलभृतं कलशं गृहीत्वा—

जीवनममृतं प्राणदमकलुषितमदोषमस्तसर्वरुजम् । जलममलमस्तु तीर्थाधिनाथबिम्बानुगे स्नात्रे ॥ ५ ॥

इति जलस्नात्रम् । इति पञ्चामृतस्नात्रम् । पुनः सहस्रमूलमिश्रजलकलशं गृहीत्वा—

## ॥ बृहत्स्नात्रविधिः ॥

[ तृतीयदिने प्रातः बृहत्स्नात्रविधिकरणात् पूर्वं पृष्ठ २ तः पृष्ठ ८ "इति जिनपूजनम्" तत् पर्यंत पूजनविधि विधाय तत्पश्चात् अग्रे बृहत्स्नात्रविधि. करणीयः ]

तद्यथा— तत्रादौ श्रीजिनबिम्बस्य पचामृतस्नात्र कुर्वीत । तद्विधिर्यथा–पुष्पाञ्जलिं करे गृहीत्वा—

पूर्वं जन्मनि मेरुभूध्रशिखरे सर्वैः सुराधीश्वरै–राज्योद्भूतिमहे महर्द्धिसहितैः पूर्वेऽभिषिक्ता जिनाः ।
तामेवानुकृतिं विधाय हृदये भक्तिप्रकर्षान्विताः, कुर्मः स्वस्वगुणानुसारवशतो बिम्बाभिषेकोत्सवम् ॥१॥

इति पुष्पाञ्जलिक्षेपः । पुन· पुष्पाञ्जलिं गृहीत्वा—

मृत्कुम्भाः कलयन्तु रत्नघटिता पीठ पुनर्मेरुता–मानीतानि जलानि सप्तजलधिक्षीराज्यदध्यात्मताम् ।
बिम्ब पारगतत्वमत्र सकलः सघः सुराधीशता, येन स्यादयमुत्तमः सुविहितः स्नात्राभिषेकोत्सव. ॥ २ ॥

इति पुष्पाञ्जलिक्षेपः । पुनः पुष्पाञ्जलिं गृहीत्वा—

आत्मशक्तिसमानीतै· सत्य चामृतवस्तुभिः । तद्वार्धिकल्पना कृत्वा स्नपयामि जिनेश्वरम् ॥ ३ ॥

ॐ रां काली सन्तर्पितास्तु स्वाहा ॥७॥
ॐ रां महाकाली सन्तर्पितास्तु स्वाहा ॥८॥
ॐ रां गौरी सन्तर्पितास्तु स्वाहा ॥९॥
ॐ रां गान्धारी सन्तर्पितास्तु स्वाहा ॥१०॥
ॐ रां महाज्वाला सन्तर्पितास्तु स्वाहा ॥११॥
ॐ रां मानवी सन्तर्पितास्तु स्वाहा ॥१२॥
ॐ रां वैरोट्या सन्तर्पितास्तु स्वाहा ॥१३॥
ॐ रां अच्छुप्ता सन्तर्पितास्तु स्वाहा ॥१४॥
ॐ रां मानसी सन्तर्पितास्तु स्वाहा ॥१५॥
ॐ रां महामानसी सन्तर्पितास्तु स्वाहा ॥१६॥

॥ गणपत्यादि–होममन्त्राः पी० ७ ॥

ॐ रां गणपतिः सन्तर्पितोऽस्तु स्वाहा ॥
ॐ रां कार्तिकेयः सन्तर्पितोऽस्तु स्वाहा ॥
ॐ रां क्षेत्रपालः सन्तर्पितोऽस्तु स्वाहा ॥
ॐ रां पुरदेवता सन्तर्पिताऽस्तु स्वाहा ॥
ॐ रां चतुर्णिकायदेवाः सन्तर्पिताः सन्तु स्वाहा ॥

होमप्रान्ते इमं मन्त्रं पठेत् । ॐ अर्हं अग्ने ! आहुतिं गृहाण २, शान्तिं कुरु २, तुष्टिं कुरु २, ऋद्धिं कुरु २, वृद्धिं कुरु २, सर्वसमीहितानि कुरु २ स्वाहा । 'स्वाहा' इत्युक्त्वा घृतेन सह शुष्कं नालिकेरं जुहुयात् । तदनन्तरे सर्वे स्नात्रकाराः अवशिष्टहोमद्रव्याणि जुहुयुः । तत आरात्रिकं मंगलदीपश्च पूर्ववत् । तत आज्ञाहीनं० इत्यादि पूर्ववत् पठनीयम् । इति द्वितीयदिने प्रातः करणीयः विधिः ॥

द्वितीयदिने
प्रातः
करणीयः

ज्योतिष्कान् सौधर्मेशानश्रीवत्साखडलपद्मोत्तरब्रह्मोत्तरसनत्कुमारमाहेन्द्रब्रह्मलान्तकशुक्रसहस्रारानतप्राणतारणाच्युतग्रैवेय-कानुत्तरभवान् वैमानिकान् इन्द्रसामानिकान् पार्षद्यत्रयस्त्रिंशल्लोकपालानीकप्रकीर्णकलोकान्तिकाभियोगिकभेद-भिन्नाश्चतुर्णिकायानपि सभार्यान् सायुधबलवाहनान् स्वस्वोपलक्षितचिह्नान्, अप्सरसश्च परिगृहीतापरिगृहीतभेदभिन्नाः ससखीकाः सदासीकाः साभरणा रुचकवासिनीर्दिक्कुमारिकाश्च सर्वाः, समुद्रनदीगिर्याकरवनदेवतास्तदेतान् सर्वांश्च, इदम् अर्घ्यं पाद्यमाचमनीयं बलिं चरुं हुतं न्यस्तं ग्राह्य २, स्वयं गृहाण २ स्वाहा अर्हं ॐ।" ( आचारदिनकर पृ० ३६ ) अनेन मन्त्रेण अग्निपूजनं विधाय सप्तपीठहोमः प्रारभेत ।

[ सूचना- मन्त्रो बोलती वखते एकवचन द्विवचन के बहुवचन, तेमज पुलिंग के स्त्रीलिंग ज्यां जे प्रमाणे होय ते प्रमाणे ध्यान राखीने उच्चारण करवु ]

॥ ५ परमेष्ठि होममन्त्राः ॥ पी० १ ॥

ॐ रा अर्हन्तः संतर्पिताः सन्तु स्वाहा ॥ १ ॥
ॐ रा सिद्धाः संतर्पिताः सन्तु स्वाहा ॥ २ ॥
ॐ रा आचार्याः संतर्पिताः सन्तु स्वाहा ॥ ३ ॥
ॐ रा उपाध्यायाः संतर्पिताः सन्तु स्वाहा ॥ ४ ॥
ॐ रा साधवः संतर्पिताः सन्तु स्वाहा ॥ ५ ॥

॥ १० दिक्पाल पी० २ ॥

ॐ रां इन्द्रः संतर्पितोऽस्तु स्वाहा ॥ १ ॥
ॐ रां अग्निः संतर्पितोऽस्तु स्वाहा ॥ २ ॥
ॐ रां यमः संतर्पितोऽस्तु स्वाहा ॥ ३ ॥
ॐ रां निर्ऋतिः संतर्पितोऽस्तु स्वाहा ॥ ४ ॥
ॐ रां वरुणः संतर्पितोऽस्तु स्वाहा ॥ ५ ॥

ॐ रां वायुः संतर्पितोऽस्तु स्वाहा ॥ ६ ॥
ॐ रां कुबेरः संतर्पितोऽस्तु स्वाहा ॥ ७ ॥
ॐ रां ईशानः संतर्पितोऽस्तु स्वाहा ॥ ८ ॥
ॐ रां नागाः संतर्पिताःसन्तु स्वाहा ॥ ९ ॥
ॐ रां ब्रह्मा संतर्पितोऽस्तु स्वाहा ॥ १० ॥

॥ १२ राशि–होममंत्राः ॥ पी० ३ ॥

ॐ रां मेषः संतर्पितोऽस्तु स्वाहा । १ ।
ॐ रां वृषः संतर्पितोऽस्तु स्वाहा । २ ।
ॐ रां मिथुनः संतर्पितोऽस्तु स्वाहा । ३ ।
ॐ रां कर्कटः संतर्पितोऽस्तु स्वाहा । ४ ।
ॐ रां सिंहः संतर्पितोऽस्तु स्वाहा । ५ ।
ॐ रां कन्या संतर्पिताऽस्तु स्वाहा । ६ ।

ॐ रां तुलाधरः संतर्पितोऽस्तु स्वाहा । ७ ।
ॐ रां वृश्चिकः संतर्पितोऽस्तु स्वाहा । ८ ।
ॐ रां धन्वी संतर्पितोऽस्तु स्वाहा । ९ ।
ॐ रां मकरः संतर्पितोऽस्तु स्वाहा । १० ।
ॐ रां कुंभः संतर्पितोऽस्तु स्वाहा । ११ ।
ॐ रां मीनः संतर्पितोऽस्तु स्वाहा । १२ ।

द्वितीयदिने
प्रातः
करणीयः

॥ २८ नक्षत्र-होममन्त्राः पी० ४ ॥

ॐ रा नासत्यौ सन्तर्पितौ स्तः स्वाहा । १ ।
ॐ रा यमो सन्तर्पितोऽस्तु स्वाहा । २ ।
ॐ रा अग्निः सन्तर्पितोऽस्तु स्वाहा । ३ ।
ॐ रा ब्रह्मा सन्तर्पितोऽस्तु स्वाहा । ४ ।
ॐ रा चन्द्रः सन्तर्पितोऽस्तु स्वाहा । ५ ।
ॐ रा रुद्रः सन्तर्पितोऽस्तु स्वाहा । ६ ।
ॐ रा अदिति' सन्तर्पितोऽस्तु स्वाहा । ७ ।
ॐ रा बृहस्पतिः सन्तर्पितोऽस्तु स्वाहा । ८ ।
ॐ रा फणिनः सन्तर्पिताः सन्तु स्वाहा । ९ ।
ॐ रा पितरः सन्तर्पिताः सन्तु स्वाहा । १० ।
ॐ रा योनि सन्तर्पिताऽस्तु स्वाहा । ११ ।
ॐ रा अर्यमा सन्तर्पितोऽस्तु स्वाहा । १२ ।

ॐ रा दिनकरः सन्तर्पितोऽस्तु स्वाहा । १३ ।
ॐ रा विश्वकर्मा सन्तर्पितोऽस्तु स्वाहा । १४ ।
ॐ रा वायुः सन्तर्पितोऽस्तु स्वाहा । १५ ।
ॐ रा इन्द्राग्नी सन्तर्पितौ स्तः स्वाहा । १६ ।
ॐ रा मित्रः सन्तर्पितोऽस्तु स्वाहा । १७ ।
ॐ रा इन्द्रः सन्तर्पितोऽस्तु स्वाहा । १८ ।
ॐ रा निर्ऋतिः सन्तर्पितोऽस्तु स्वाहा । १९ ।
ॐ रा जलः सन्तर्पितोऽस्तु स्वाहा । २० ।
ॐ रा विश्वदेवाः सन्तर्पिताः सन्तु स्वाहा । २१ ।
ॐ रा ब्रह्मा सन्तर्पितोऽस्तु स्वाहा । २२ ।
ॐ रा विष्णुः सन्तर्पितोऽस्तु स्वाहा । २३ ।
ॐ रा वसवः सन्तर्पिताः सन्तु स्वाहा । २४ ।

ॐ रां वरुणः सन्तर्पितोऽस्तु स्वाहा । २५ ।
ॐ रां अजपादः सन्तर्पितोऽस्तु स्वाहा । २६ ।
ॐ रां अहिर्बुघ्नः सन्तर्पितोऽस्तु स्वाहा । २७ ।
ॐ रां पूषा सन्तर्पितोऽस्तु स्वाहा । २८ ।

॥ ९ ग्रह होममन्त्राः पी० ५ ॥

ॐ रां आदित्यः सन्तर्पितोऽस्तु स्वाहा ॥१॥
ॐ रां चन्द्रः सन्तर्पितोऽस्तु स्वाहा ॥२॥
ॐ रां मङ्गलः सन्तर्पितोऽस्तु स्वाहा ॥३॥
ॐ रां बुधः सन्तर्पितोऽस्तु स्वाहा ॥४॥
ॐ रां गुरुः सन्तर्पितोऽस्तु स्वाहा ॥५॥
ॐ रां शुक्रः सन्तर्पितोऽस्तु स्वाहा ॥६॥
ॐ रां शनैश्चरः सन्तर्पितोऽस्तु स्वाहा ॥७॥
ॐ रां राहुः सन्तर्पितोऽस्तु स्वाहा ॥८॥
ॐ रां केतुः सन्तर्पितोऽस्तु स्वाहा ॥९॥

॥ १६ विद्यादेवी होममन्त्राः पी० ६ ॥

ॐ रां रोहिणी सन्तर्पितास्तु स्वाहा ॥१॥
ॐ रां प्रज्ञप्ती सन्तर्पितास्तु स्वाहा ॥२॥
ॐ रां वज्रशृङ्खला सन्तर्पितास्तु स्वाहा ॥३॥
ॐ रां वज्राङ्कुशी सन्तर्पितास्तु स्वाहा ॥४॥
ॐ रां अप्रतिचक्रा सन्तर्पितास्तु स्वाहा ॥५॥
ॐ रां पुरुषदत्ता सन्तर्पितास्तु स्वाहा ॥६॥

द्वितीयदिने
प्रातः
करणीयः

८ कार्तिकेयसन्तर्पणे–मधूकपुष्पैः सघृतैः प्लक्षसमिद्भिर्होमः ।

९ क्षेत्रपालसन्तर्पणे–तिलपिण्डैर्धत्तूरसमिद्भिर्होमः ।

१० पुरदैवतसन्तर्पणे–घृत–गुड–क्षौद्रैर्वटसमिद्भिर्होमः ।

११ चतुर्णिकायदेवसन्तर्पणे–नानाफलैः पायसैः प्राप्तसमिद्भिर्होमः ।

[ सर्वत्र होमे मूलमन्त्राः । समिधः सर्वत्र प्रादेशप्रमाणाः ]

अग्निस्थापनमन्त्रः– ॐ र रा रिं रू रैं रः नमो अग्नये, नमो बृहद्भानवे, नमो अनन्ततेजसे, नमो अनन्तवीर्याय, नमो अनन्तगुणाय, नमो हिरण्यतेजसे, नमो छागवाहनाय, नमो हव्याशनाय, अत्र कुण्डे आगच्छ आगच्छ अवतर अवतर तिष्ठ तिष्ठ स्वाहा ॥ ततो अग्निकुण्डे आदौ कर्पूरं दग्ध्वा आग्नेयकोणतः अग्निं न्यसेत् ॥ ततो वह्निं शमी–पिप्पल–कपित्थ–कुटजबिल्व–आमलकसमिद्भिः प्रबोध्य अनेन मन्त्रेण घृत–मधु–तिल–यव–नानाफलानि जुहुयात् । तन्मन्त्रो यथा—

" ॐ अर्हं ॐ अग्ने प्रसन्नः सावधानो भव, तवायमवसरः, तदाकारयेन्द्र यम नैर्ऋति वरुण वायु कुबेरमीशान नागान् ब्रह्माण लोकपालान्, ग्रहाश्च सूर्यशशिकुजसौम्यबृहस्पतिकविशनिराहुकेतून्सुराश्चासुरनागसुपर्णविद्युदग्निद्वीपोदधिदिक्कुमारान् भवनपतीन् पिशाचभूतयक्षराक्षसकिन्नरकिंपुरुषमहोरगगन्धर्वान् व्यन्तरान् चन्द्रार्कग्रहनक्षत्रतारकान्

मनोरम–सर्वभद्र–सुविशाल–सुमनस–सौमनस–प्रियंकरादित्य–ग्रैवेयकभवा विजय-वैजयन्त-जयन्तापराजित-सर्वार्थसिद्धि-पञ्चानुत्तरभवा वैमानिका निजनिजवर्णवस्त्रवाहनध्वजधराः सकलत्राः सायुधाः सवाहना सपरिकराः प्रभूतभक्तयः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु, इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु गृह्णन्तु, सन्निहिता भवन्तु भवन्तु स्वाहा, जलं गृह्णन्तु गृह्णन्तु, गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णन्तु गृह्णन्तु शान्तिं कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० कुर्वन्तु कुर्वन्तु सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ ४ ॥ ८ ॥ (आचारदिनकरे पृष्ठ २०६) ॥ इति सप्तमपीठपूजनम् ॥

एवं सर्वेषां पीठानां पूजनं विधाय त्रिकोणकुंडे होमः ॥ स यथाक्रमः—

१ परमेष्ठिसन्तर्पणे—खंड—घृत—पायसैः श्रीखंड—श्रीपर्णीसमिद्भिर्होमः ।

२ दिक्पालसन्तर्पणे—घृत—मधु फलैः प्लक्षाश्वत्थसमिद्भिर्होमः ।

३ राशिसन्तर्पणे—क्षीरघृताभ्यां न्यग्रोधबिल्वसमिद्भिर्होमः ।

४ नक्षत्रसन्तर्पणे—सर्वौषधिभिर्घृतमधुगुग्गुलफलैः प्लक्षाश्वत्थन्यग्रोधसमिद्भिर्होमः ।

५ ग्रहसन्तर्पणे—क्षीरमधुघृतैः फलसहितैः कपित्थाश्वत्थसमिद्भिर्होमः ।

६ विद्यादेवीसन्तर्पणे—घृतपायसखंडफलैरश्वत्थसमिद्भिर्होमः ।

७ गणपतिसन्तर्पणे—मोदकैः उदुम्बुरसमिद्भिर्होमः ।

द्वितीयदिने
प्रातः
करणीयः

योगिनीमध्यगताय श्रीक्षेत्रपालाय श्रीक्षेत्रपाल सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ पुलिं० एक० ॥ ३ ॥

ॐ म म नमः पुरदेवाय स्वाहा ॥ इति मूल० ॥ ॐ नमः पुरदेवाय सायुधाय सवाहनाय पुरदेव इह० शेष पूर्ववत् ॥ पुलिं० एक० ॥ ४ ॥ चतुर्णिकायदेवपूजनम्–भवनपतीन् प्रति–प्रथम आग्नेये—

असुर–नाग–सुपर्ण–विद्युदग्नि–द्वीपोदधि–दिक्–पवन–स्तनितरूपा दशविधा भवनपतयो निजनिजवर्णवस्त्रवाहन-ध्वजधराः सकलत्रा सायुधाः सवाहनाः सपरिकराः प्रभूत–भक्तयः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदमर्घ्यं पाद्य बलिं चरु गृह्णन्तु गृह्णन्तु स्वाहा सन्निहिता भवन्तु भवन्तु स्वाहा, जल गृह्णन्तु गृह्णन्तु, गन्ध० पुष्प० अक्षतान्० फलानि० मुद्रा० धूप० दीप० नैवेद्य० सर्वोपचारान् गृह्णन्तु गृह्णन्तु, शान्तिं कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ १ ॥ ५ ॥ व्यतरान्–प्रति–नैऋते—

पिशाच–भूत–यक्ष–राक्षस–किन्नर–किंपुरुष–महोरग–गन्धर्व–अणपन्नि–पणपन्नि–ऋषिपाति–भूतपाति–क्रन्दि-महाक्रन्दि–कूष्माण्ड–पतगरूप–व्यन्तरा निजनिज० इह० शेष पूर्ववत् ॥ २ ॥ ६ ॥ ज्योतिष्कान् प्रति— वायव्ये—

चन्द्र–सूर्य–ग्रह–नक्षत्र–तारारूपा ज्योतिष्का निजनिज० शेष पूर्ववत् ॥ ३ ॥ ७ ॥ वैमानिकान् प्रति ईशाने—

सौधर्मेशान–सनत्कुमार–माहेन्द्र–ब्रह्म–लान्तक–शुक्र–सहस्रारानत–प्राणतारणाच्युत–कल्पभवाः सुदर्शन–सुप्रभ–

अथ सप्तमपीठपूजनम्— प्रथमं गणपतिं प्रति—

ॐ गं गं गं नमो गणपतये स्वाहा ॥ इति मूल० ॥ ॐ नमो गगपतये सायुधाय सवाहनाय सपरिकराय गणपते इह० शेषं ( पुंलिंग—एकवचनम् ) पूर्ववत् ॥ १ ॥ मोदकनैवेद्यम् ॥ कार्तिकेयं प्रति—

ॐ ब्लीं नमः कार्तिकेयाय स्वाहा ॥ इति मूल० ॥ ॐ नमः कार्तिकेयाय सायुधाय सवाहनाय सपरिकराय कार्तिकेय इह० शेषं पूर्ववत् ॥ पुलिं० एक० ॥ २ ॥ क्षेत्रपालं प्रति—

समर—डमर—संगमोद्दामराडम्बराडम्बलं बोलसद्विंशति—प्रौढबाहूपमाप्राप्तसर्पाधिपालंकृतिः,
निशितकठिनखड्गखड्गांगजाकुन्तविस्फोटकोदंडकांडाछलियष्टिशुलोरु—चक्रक्रमभ्राजिहस्तावलिः ।
अतिघनजनजीवनपूर्णविस्तीर्ण—सद्वर्णदेहद्युताविद्युदुद्भूतिभाग्भोगिहारोरुरत्नच्छटासंगतिः,
मनुजदनुजकीकसोत्पन्नकेयूरताडङ्करम्योर्मिकास्फारशीर्षण्य—सिंहासनोल्लासभास्वत्तमः क्षेत्रपः ॥ ३ ॥

ॐ क्षां क्षीं क्षूं क्षैं क्षौं नमः श्रीक्षेत्रपालाय कृष्णगौरकाञ्चनधूसरकपिलवर्णाय कालमेघ—मेघनाद—गिरिविदारण—आह्लादन—प्रह्लादन—खंजक—भीम—गोमुख—भूषण—दुरितविदारण—दुरितारि—प्रेतनाथ—प्रभृतिप्रसिद्धाभिधानाय विंशतिभुजादण्डाय बर्बरकेशाय जटाजूटमंडिताय वासुकीकृतजिनोपवीताय तक्षककृतमेखलाय शेषकृतहाराय नानायुधहस्ताय सिंहचर्मावरणाय प्रेतासनाय कुक्कुरवाहनाय त्रिलोचनाय आनन्दभैरवाद्यष्टभैरवपरिवृताय चतुःषष्टि—

सव्यपाणिधृतकार्मुकस्फरान्यस्फुरद्विशिखखड्गधारिणी ।
विद्युदाभतनुरश्ववाहनाऽच्छुप्तिका भगवती ददातु शम् ॥ १४ ॥

ॐ अ ऐं नमः श्रीअच्छुप्तायै विद्यादेव्यै भगवति श्रीअच्छुप्ते इह० शेष पूर्ववत् ॥१४॥ मानसीं प्रति—

हंसासनसमासीना वरदेन्द्रायुधान्विता । मानसी मानसीं पीडा हन्तु जाम्बूनदच्छवि ॥ १५ ॥

ॐ ह्रीं अर्हं नमः श्रीमानस्यै विद्यादेव्यै भगवति श्रीमानसि इह० शेष पूर्ववत् ॥ १५ ॥ महामानसीं प्रति—

करखड्गरत्नवरदाढ्यपाणिभृच्छशिनिभा मकरगमना । सघस्य रक्षणकरी जयति महामानसी देवी ॥१६॥

ॐ ह हं ह स नमः श्रीमहामानस्यै विद्यादेव्यै भगवति महामानसि इह० शेष पूर्ववत् ॥ १६ ॥ इति प्रत्येकपूजा ॥

ॐ ह्रूमौं नम. षोडशविद्यादेवीभ्यः सायुधाभ्यः सवाहनाभ्यः सपरिकराभ्यः विघ्नहरिभ्यः शिवकरीभ्य. भगवत्य. विद्यादेव्यः इह० शेष पूर्ववत् ॥ इति षोडशविद्यादेवीना परिपिंडितपूजा ॥ एव पूजा विधाय षोडशहस्तवस्त्रेण पीठस्याच्छादनम् ॥ इति षष्ठपीठे षोडशविद्यादेवीपूजनम् ॥ ( आ० दि० पृ० १६२ )

शतपत्रस्थितचरणा मुसलं वज्रं च हस्तयोर्दधती ।
कमनीयाञ्जनकान्ति–गान्धारी गां शुभां दधात् ॥ १० ॥

ॐ गं गां नमः श्रीगान्धार्यै विद्यादेव्यै भगवति श्रीगान्धारि इह० शेषं पूर्ववत् ॥ १० ॥ महाज्वालां प्रति–

मार्जारवाहना नित्यं ज्वालोद्भासिकरद्वया । शशांकधवला ज्वाला–देवी भद्रं ददातु नः ॥ ११ ॥

ॐ क्लीं नमः श्रीमहाज्वालायै विद्यादेव्यै भगवति महाज्वाले इह० शेषं पूर्ववत् ॥ ११ ॥ मानवीं प्रति–

नीलांगी नीलसरोजवाहना वृक्षभासमानकरा । मानवगणस्य सर्वस्य मंगलं मानवी दधात् ॥ १२ ॥

ॐ व च नमः श्रीमानव्यै विद्यादेव्यै भगवति श्रीमानवि इह० शेषं पूर्ववत् ॥ १२ ॥ वैरोट्यां प्रति–

खड्गस्फुरत्स्फुरितवीर्यवदूर्ध्वहस्ता, सद्दंदशुकवरदापरहस्तयुग्मा ।
सिंहासनाब्जमुदतारतुषारगौरा वैरोट्ययाप्यभिधयास्तु शिवाय देवी ॥ १३ ॥

ॐ जं जं नमः श्रीवैरोट्यायै विद्यादेव्यै भगवति श्रीवैरोट्ये इह० शेषं पूर्ववत् ॥ १३ ॥ अच्छुप्तां प्रति–

ॐ नमः श्रीअप्रतिचक्रायै विद्यादेव्यै भगवति अप्रतिचक्रे इह० शेष पूर्ववत् ॥ ५ ॥ पुरुषदत्ता प्रति–

खड्गस्फराङ्कितकरद्वयशासमाना, मेघाभसैरिभपट्टस्थितिभासमाना ।
जात्यार्जुनप्रभतनुः पुरुषाग्रदत्ता, भद्र प्रयच्छतु सता पुरुषाग्रदत्ता ॥ ६ ॥

ॐ ह स नमः श्रीपुरुषदत्तायै विद्यादेव्यै भगवति श्रीपुरुषदत्ते इह० शेष पूर्ववत् ॥ ६ ॥ काली प्रति–

शरदम्बुधरप्रमुक्तचचद्गगनतलाभतनुद्युतिर्दयाढ्या ।
निकचकमलवाहना गदाभृत् कुशलमलकुरुतात् सदैव काली ॥ ७ ॥

ॐ ह्रीं नमः श्रीकालिकायै विद्यादेव्यै भगवति श्रीकालिके इह० शेष पूर्ववत् ॥ ७ ॥ महाकाली प्रति–

नरवाहना शशधरोपलोज्ज्वला रुचिराक्षसूत्रफलविस्फुरत्करा ।
शुभघटिकापविनिरेण्यधारिणी भुवि कालिका शुभकरा महापरा ॥ ८ ॥

ॐ हँ घे नमो महाकाल्यै विद्यादेव्यै भगवति श्रीमहाकालिके इह० शेष पूर्ववत् ॥ ८ ॥ गौरीं प्रति–

गोधासनसमासीना कुन्दकर्पूरनिर्मला । सहस्रपत्रसयुक्त–पाणिगौरी श्रियेऽस्तु न. ॥ ९ ॥

ॐ ए नम' श्रीगौर्यै विद्यादेव्यै भगवति श्रीगौरि इह० शेष पूर्ववत् । ९ ॥ गान्धारी प्रति–

इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २, सन्निहिता भव २ स्वाहा, जलं गृहाण २, गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृहाण २, शान्ति कुरु २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि कुरु २ स्वाहा ॥ १ ॥ प्रज्ञप्ति प्रति—

शवितसरोरुहहस्ता मयूरकृतयान लीलया कलिता । प्रज्ञप्तिर्विज्ञप्ति शृणोतु नः कमलपत्राभा ॥ २ ॥

ॐ हं सं क्लीं नमः श्रीप्रज्ञप्त्यै विद्यादेव्यै भगवति श्रीप्रज्ञप्ति इह० शेषं पूर्ववत् ॥ २ ॥ वज्रशृंखलां प्रति—

सशृंखला गदाहस्ता कनकप्रभविग्रहा । पद्मासनस्था श्रीवज्र—शृंखला हन्तु नः खलान् ॥ ३ ॥

ॐ नमः श्रीवज्रशृंखलायै विद्यादेव्यै भगवति श्रीवज्रशृंखले इह० शेषं पूर्ववत् ॥ ३ ॥ वज्रांकुशीं प्रति—

निस्त्रिंशवज्रफलकोत्तमकुन्तयुक्त—हस्ता सुतप्तविलसत्कलधौतकान्तिः ।
उन्मत्तदन्तिगमना भुवनस्य विघ्नं वज्रांकुशी हरतु वज्रसमानशक्तिः ॥ ४ ॥

ॐ लं लं लं नमः श्रीवज्रांकुशायै विद्यादेव्यै भगवति श्रीवज्रांकुशे इह० शेषं पूर्ववत् ॥ ४ ॥ अप्रतिचक्रां प्रति—

गरुत्मत्पृष्ठ आसीना कार्त्तस्वरसमच्छविः । भूयादप्रतिचक्रा नः सिद्धये चक्रधारिणी ॥ ५ ॥

अथ ग्रहाणा परिपिंडितपूजा—

ॐ नमः श्रीआदित्यादिग्रहेभ्यः कालप्रकाशकेभ्य. शुभाशुभकर्मफलदेभ्य. सर्वे ग्रहाः सायुधाः सवाहनाः सपरिच्छदाः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदमर्घ्यं पाद्य बलि चरु गृह्णन्तु गृह्णन्तु स्वाहा, सन्निहिता भवन्तु भवन्तु स्वाहा, जल गृह्णन्तु गृह्णन्तु, गन्ध० पुष्प० अक्षतान्० फलानि० मुद्रा० धूप० दीप० नैवेद्य० सर्वोपचारान् गृह्णन्तु गृह्णन्तु, शान्ति कुर्वन्तु कुर्वन्तु, तुष्टि० पुष्टि० ऋद्धि० वृद्धि० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ इति ग्रहाणा परिपिण्डितपूजा ॥ पूजा विधाय नवहस्तवस्त्रेणाच्छादनम् ॥ इति पञ्चमपीठपूजनम् ( आ० दि० पृ० १८० )

अथ षष्ठपीठे षोडशविद्यादेवीपूजनम् ॥ प्रथमं पुष्पाञ्जलिं करे गृहीत्वा—

यासा मन्त्रपदैर्विशिष्टमहिमप्रोद्भूतभूत्युत्करैः, षट् कर्माणि कुलाध्वसंश्रितधियः क्षेमात् क्षणात् कुर्वते ।
ता विद्याधरवृन्दवन्दितपदा विद्यावलीसाधने, विद्यादेव्य उरुप्रभावविभवं यच्छन्तु भक्तिस्पृशाम् ॥ १ ॥

इति पुष्पाञ्जलिक्षेपः ॥ रोहिणी प्रति—

शस्त्राक्षमालाशरचापशालि—चतुष्करा कुन्दतुषारगौरा । गोगामिनी गीतवरप्रभावा श्रीरोहिणी सिद्धिमिमा ददातु ॥१॥

ॐ ह्रीं नमः श्रीरोहिण्यै विद्यादेव्यै भगवति श्रीरोहिणि इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ

ॐ सुं नमः श्रीशुक्राय दैत्याचार्याय आग्नेयदिगधीशाय स्फटिकोज्ज्वलाय श्वेतवस्त्राय कुंभहस्ताय तुरगवाहनाय श्रीशुक्र सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ६ ॥ शनिं प्रति–

मा भूद्विपत्समुदयः खलु देहभाजां, द्रागित्युदीरितलघिष्ठगतिर्नितान्तम् ॥
कादम्बिनीकलितकान्तिरनन्तलक्ष्मीं, सूर्यात्मजो वितनुताद् विनयोपगूढम् ॥ ॥

ॐ शः नमः शनैश्चराय पश्चिमदिगधीशाय नीलदेहाय नीलांबराय परशुहस्ताय कमलवाहनाय श्रीशनैश्चर सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ७ ॥ राहुं प्रति–

सिंहिकासुतसुधाकरसूर्योन्मादसादन विपादविघातिन् । उद्यतं झटिति शत्रुसमुहं श्राद्धदेव भुवनानि नयस्व ॥८॥

ॐ क्षः नमः श्रीराहवे नैर्ऋतदिगधीशाय कज्जलश्यामलाय श्यामवस्त्राय परशुहस्ताय सिंहवाहनाय श्रीराहो सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ८ ॥ केतुं प्रति–

सुखोत्पातहेतो विपद्वार्द्धिसेतो निपद्यासमेतोत्तरीयार्द्धकेतो ।
अभद्रानुपेतोपमावायुकेतो जयाशंसनाहर्निशं तार्क्ष्यकेतो ॥ ९ ॥

ॐ नमः श्रीकेतवे राहुप्रतिच्छन्दाय श्यामांगाय श्यामवस्त्राय पन्नगवाहनाय पन्नगहस्ताय श्रीकेतो सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ९ ॥

द्वितीयदिने
प्रातः
करणीयः

ॐ ह्र ह्रु ह सः नम· श्रीमङ्गलाय दक्षिणदिगधीशाय विद्रुमवर्णाय रक्ताम्बराय भूमिस्थिताय कुद्दालहस्ताय श्रीमङ्गल सायुध सवाहन सपरिच्छद इह० शेप पूर्ववत् ॥ ३ ॥ बुध प्रति–

प्रियगुप्रख्यागो गलदमलपीयूपनिकप–स्फुरद्वाणीत्राणीकृतसकलशास्त्रोपचयधीः ।
समस्तप्राप्तीनामनुपमविधान शशिसुत, प्रभूतारातीनामुपयनयतु भग स भगवान् ॥ ४ ॥

ॐ ऐं नमः श्रीबुधाय उत्तरदिगधीशाय हरितवस्त्राय कलहसवाहनाय पुस्तकहस्ताय श्रीबुध सायुध सवाहन सपरिच्छद इह० शेप पूर्ववत् ॥ ४ ॥ गुरु प्रति–

शास्त्रप्रस्तारसारप्रततमतिवितानाभिमानातिमान–प्रागल्भ्यः शंभुजभक्षयकरदिनकृद्विष्णुभिः पूज्यमानः ।
निःशेपास्वप्नजातिव्यतिकरपरमाधीतिहेतुर्बृहत्याः, कान्तः कान्तादिवृद्धिं भवभयहरणः सर्वसघस्य कुर्यात् ॥५॥

ॐ जीव जीव नमः श्रीगुरवे बृहतीपतये ईशानदिगधीशाय सर्वदेवाचार्याय सर्वग्रहबलवत्तराय काचनवर्णाय पीतवस्त्राय पुस्तकहस्ताय श्रीहसवाहनाय श्रीगुरो सायुध सवाहन सपरिच्छद इह० शेप पूर्ववत् ॥ ५ ॥ शुक्र प्रति–

दयितसंवृतदानपराजित–भवन्देहि शरण्य हिरण्यद । दनूजपूज्य जयोशन सर्वदा, दयितसवृतदानपराजित ॥६॥

ॐ घृणि घृणि नमः श्रीसूर्याय सहस्रकिरणाय रत्नादेवीकान्ताय वेदगर्भाय यमयमुनाजनकाय जगत्कर्मसाक्षिणे पुण्यकर्मप्रभावकाय पूर्वदिगधीशाय स्फटिकोज्ज्वलाय रक्तवस्त्राय कमलहस्ताय सप्ताश्वरथवाहनाय श्रीसूर्य सवाहन सपरिच्छद इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ, इदमर्घ्यं पाद्यं बलिं चरुं गृहाण गृहाण, सन्निहितो भव भव स्वाहा, जलं गृहाण गृहाण, गन्धं० पुष्पं० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुरु कुरु, तुष्टिं कुरु कुरु, पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि देहि स्वाहा ॥ १ ॥

चन्द्रं प्रति—

प्रोद्यत्पीयूषपूरप्रसृमरजगतीपोषनिर्दोषकृत्य, व्यावृत्तो ध्वान्तकान्ताकुलकलितमहामानदत्तापमानः ।
उन्माद्यत्कंटकालीदलकलितसरोजालीनिद्राविनिद्र—श्चन्द्रश्चन्द्रावदातं गुणनिवहमभिव्यातनोत्वात्मभाजाम् ॥ १ ॥

ॐ चं चं चं नमश्चन्द्राय शंभुशेखराय षोडशकलापरिपूर्णाय तारगणाधीशाय वायव्यदिगधीशाय अमृतायामृतमयाय सर्वजगत्पोषणाय श्वेतवस्त्राय श्वेतदशवाजिवाहनाय सुधाकुंभहस्ताय श्रीचन्द्र सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ २ ॥ मंगलं प्रति—

ऋणाभिहन्ता सुकृताधिगन्ता, सदैव वक्रः क्रतुभोजिमान्यः ।
प्रमाथकृद्विघ्नसमुच्चयानां, श्रीमंगलो मंगलमातनोतु ॥ ३ ॥

ॐ घृणि घृणि नमः पूष्णे स्वाहा ॥ ॐ नमो पूष्णे रेवतीशाय पूषन् इह० शेष पूर्ववत् ॥ एकन० ॥ २८ ॥ एतेषा प्रत्येक नक्षत्रपूजा ॥ ततः—

ॐ नमः सर्वनक्षत्रेभ्यः सर्वनक्षत्राणि सर्वनक्षत्रेशा इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदम० आचमनीय गृह्णन्तु गृह्णन्तु सन्निहिता भवन्तु भवन्तु स्वाहा ॥ जल गृह्णन्तु गन्ध० अक्षतान्० फलानि० मुद्रा० पुष्प० धूप० दीप० नैवेद्य० सर्वोपचारान्० शान्ति कुर्वन्तु कुर्वन्तु, तुष्टि० पुष्टि० ऋद्धि० वृद्धि० सर्वसमीहित ददतु ददतु स्वाहा ॥ इत्यनेन मत्रेण परिपिंडितपूजा उपरि अष्टाविंशतिहस्तवस्त्राच्छादनम् ॥ इति चतुर्थपीठे नक्षत्रपूजा ॥ (आ० दि० २२१ पृ०)

अथ पञ्चमपीठे नवग्रहपूजनम् ॥ प्रथम पुष्पाञ्जलि गृहीत्वा—

सर्वे ग्रहा दिनकरप्रमुखाः स्वकर्म—पूर्वोपनीतफलदानकरा जनानाम् ।
पूजोपचारनिकर स्वकरेषु लात्वा, सन्त्वागताः सपदि तीर्थकरार्चनेऽत्र ॥ १ ॥

इति ग्रहपीठे पुष्पाञ्जलिक्षेपः । तत. सूर्यं प्रति—

विकसितकमलावलिविनिर्यत्परिमललालितपूतपादपद्मः ।
दशशतकिरणः करोतु नित्यं भुवनगुरोः परमर्चने शुभौघम् ॥ १ ॥

द्वितीयदिने
प्रात
करणीय

ॐ ब्रह्म ब्रह्म नमो ब्रह्मणे स्वाहा ॥ ॐ नमो ब्रह्मणे अभिजिदधीशाय ब्रह्मन् इह० शेषं पूर्ववत् ॥ एकव० ॥ २२ ॥ श्रवणं प्रति—

ॐ नमो विष्णवे स्वाहा ॥ ॐ नमो विष्णवे श्रवणाधीशाय विष्णो इह० शेषं पूर्ववत् ॥ एकव० ॥ २३ ॥ धनिष्ठां प्रति—

ॐ नमो वसुभ्यः स्वाहा ॥ ॐ नमो वसुभ्यो धनिष्ठेभ्यः वसव इह० शेषं पूर्ववत् ॥ बहुव० ॥ २४ ॥ शतभिषजं प्रति—

ॐ वं वं नमो वरुणाय स्वाहा ॥ ॐ नमो वरुणाय शतभिगधीशाय वरुण इह० शेषं पूर्ववत् ॥ एकव० ॥ २५ ॥ पूर्वाभद्रपदां प्रति—

ॐ नमो अजपादाय स्वाहा ॥ ॐ नमो अजपादाय पूर्वाभद्रपदेश्वराय अजपाद इह० शेषं पूर्ववत् ॥ एकव० ॥ २६ ॥ उत्तराभद्रपदां प्रति—

ॐ नमो अहिर्बुध्नाय स्वाहा ॥ ॐ नमो अहिर्बुध्नाय उत्तराभद्रपदेश्वराय अहिर्बुध्न इह० शेषं पूर्ववत् ॥ एकव० ॥ २७ ॥ रेवतीं प्रति—

ॐ वषट् नम इन्द्राय स्वाहा ॥ ॐ र र नमोऽग्नये स्वाहा ॥ इति मूलमन्त्रौ ॥ ॐ नम इन्द्राग्निभ्यां विशाखास्वामिभ्या इन्द्राग्नी इह० शेष पूर्ववत् ॥ द्विवचनम् ॥ १६ ॥ अनुराधाप्रति—

ॐ नमः घृणि घृणि नमो मित्राय स्वाहा ॥ ॐ नमो मित्राय अनुराधेश्वराय मित्र इह० शेष पूर्ववत् ॥ एकव० ॥ १७ ॥ ज्येष्ठा प्रति—

ॐ वषट् नम इन्द्राय स्वाहा ॥ ॐ नम इन्द्राय ज्येष्ठेश्वराय इन्द्र इह० शेष पूर्ववत् ॥ एकव० ॥ १८ ॥ मूल प्रति—

ॐ प प नमो निर्ऋतये स्वाहा ॥ ॐ नम नैर्ऋताय मूलाधीशाय नैर्ऋत इह० शेष पूर्ववत् ॥ एकव० ॥ १९ ॥ पूर्वाषाढा प्रति—

ॐ व वं नमो जलाय स्वाहा ॥ ॐ नमो जलाय पूर्वाषाढास्वामिने नैर्ऋत इह० शेष० पूर्ववत् ॥ एकव० ॥ २० ॥ उत्तराषाढा प्रति—

ॐ विश्व विश्व नमो विश्वदेवेभ्यः स्वाहा ॥ ॐ नमो विश्वदेवेभ्यः उत्तराषाढास्वामिभ्य. विश्वे देवा इह० शेष पूर्ववत् ॥ बहुव० ॥ २१ ॥ अभिजित प्रति—

ॐ स्वधा नमः पितृभ्यः स्वाहा ॥ ॐ नमः पितृभ्यो मघेशेभ्यः पितर इह० शेषं पूर्ववत् ॥ बहुवचनपाठः ॥ १० ॥ पूर्वाफाल्गुनीं प्रति—

ॐ ए नमो योनये स्वाहा ॥ ॐ नमो योनये पूर्वाफाल्गुनीस्वामिन्यै योनये इह० शेषं पूर्ववत् ॥ एकवचनं ॥ स्त्रीलिंगे सन्निहिता भव २ इति ॥ ११ ॥ उत्तराफाल्गुनीं प्रति—

ॐ घृणि २ नमोऽर्यम्णो उत्तराफाल्गुनीस्वामिने स्वाहा ॥ ॐ अर्यमन् इह० शेषं पूर्ववत् ॥ एकवचनम् ॥ १२ ॥ हस्तं प्रति—

ॐ घृणि २ नमो दिनकराय स्वाहा ॥ ॐ नमो दिनकराय हस्तस्वामिने दिनकर इह० शेषं पूर्ववत् ॥ एकव० ॥ १३ ॥ चित्रां प्रति—

ॐ तक्ष २ नमो विश्वकर्मणे स्वाहा ॥ ॐ नमो विश्वकर्मणे चित्रेशाय विश्वकर्मन् इह० शेषं पूर्ववत् ॥ एकव० ॥ १४ ॥ स्वातिं प्रति—

ॐ यः यः नमो वायवे स्वाहा ॥ ॐ नमो वायवे स्वातीशाय वायो इह० शेषं पूर्ववत् ॥ एकव० १५ ॥ विशाखां प्रति—

ॐ च च च नमश्चन्द्राय स्वाहा ॥ ॐ नमश्चन्द्राय मृगशिरोऽधीशाय चन्द्र इह० शेप पूर्ववत् ॥ एक-वचनम् ॥ ५ ॥ आर्द्रां प्रति–

ॐ द्रु द्रु नमो रुद्राय स्वाह ॥ ॐ नमो रुद्राय आर्द्रेश्वराय रुद्र इह० शेप पूर्ववत् एकव० ॥ ६ ॥ पुनर्वसु प्रति–

ॐ जानि जानि नमो अदितये स्वाहा ॥ ॐ नमो अदितये पुनर्वसुस्वामिन्यै अदिते इह० शेप पूर्ववत् ॥ एकव० स्त्रीलिंगे सन्निहिता भव २ इति ॥ ७ ॥ पुष्यं प्रति–

ॐ जीव जीव नमो बृहस्पतये स्वाहा ॥ ॐ नमो बृहस्पतये पुष्याधीशाय बृहस्पते इह० शेप पूर्ववत् ॥ एकव० ॥ ८ ॥ आश्लेषा प्रति–

ॐ फु फु नमः फणिभ्यः स्वाहा ॥ ॐ नमः फणिभ्यः आश्लेषास्वामिभ्यः फणिन इह शान्तिक-पूजामहोत्सवे आगच्छत २, इदमर्घं पाद्य वलि चरु गृह्णीत २, सन्निहिता भवत २ स्वाहा, जल गृह्णीत २ गन्ध० अक्षतान्० फलानि० मुद्रा० पुष्प० धूप० दीप० नैवेद्य० सर्वोपचारान्० शान्ति कुरुत २, तुष्टि० पुष्टि० ऋद्धि० वृद्धि० सर्वसमीहितानि ददत २ स्वाहा ॥ बहुवचनपाठः ॥ ९ ॥ मघा प्रति–

ॐ ज्वीं नमो नासत्याभ्यां स्वाहा ॥ इति मूलमन्त्रः ॥ ॐ नमो नासत्याभ्याम् अश्विनिस्वामिभ्यां नासत्यौ इह शान्तिकपूजामहोत्सवे आगच्छतम् २, इदमर्घ्यं पाद्यं वलिं चरुम् आचमनीयं गृह्णीतं २ सन्निहितौ भवतं २ स्वाहा, जलं गृह्णीतं २, गन्धं० अक्षतान्० फलानि० मुद्रां० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णीतं २, शान्तिं कुरुतं २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि ददतं २ स्वाहा ॥ द्विवचनम् ॥ १ ॥ भरणीं प्रति—

ॐ यं यं नमो यमाय स्वाहा ॥ इति मूल० ॥ ॐ नमो यमाय भरणीस्वामिने यम इह शान्तिक-पूजामहोत्सवे आगच्छ आगच्छ इदमर्घ्यं पाद्यं वलिं चरुम् आचमनीयं गृहाण २ सन्निहितो भव २ स्वाहा, जलं गृहाण २, गन्धं० अक्षतान्० फलानि० मुद्रां० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृहाण २, शान्तिं कुरु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि २ स्वाहा ॥ एकवचनम् ॥ २ ॥ कृत्तिकां प्रति—

ॐ रं रं नमो अग्नये स्वाहा ॥ ॐ नमोऽग्नये कृत्तिकास्वामिने अग्ने इह० शेषं पूर्ववत् ॥ एकवचनम् ॥ ३ ॥ रोहिणीं प्रति—

ॐ ब्रह्मब्रह्मणे नमः स्वाहा ॥ ॐ नमो ब्रह्मणे रोहिणीश्वराय ब्रह्मन् इह० शेषं पूर्ववत् ॥ ४ ॥ एक-वचनम् ॥ ४ ॥ मृगशिरः प्रति—

प्रथमदिने
मध्याह्ने
करणीयः

॥ ६७ ॥

ॐ नमो मकराय मकर इह शान्तिकपूजामहोत्सवे० शेप पूर्ववत् ॥ १० ॥ कुभ प्रति–

ग्रहेशतनयस्थानं पश्चिमानन्ददायकः । कुभः करोतु निर्दंभ पुण्यारम्भ मनीषिणाम् ॥ ११ ॥

ॐ नमः कुभाय कुभ इह शान्तिकपूजामहोत्सवे० शेपं पूर्ववत् ॥ ११ ॥ मीन प्रति–

कनेरुच्चत्यदातार क्षेत्र सुरगुरोरपि । वन्दामहे नृधर्माशा–पावन मीनमुत्तमम् ॥ १२ ॥

ॐ नमो मीनाय मीन इह शान्तिकपूजामहोत्सवे० शेप पूर्ववत् ॥ १२ ॥ एभिर्मंत्रै. प्रत्येकपूजा ॥

ततोऽनन्तरम्—

ॐ मेप–वृप–मिथुन–कर्क–सिंह–कन्या–तुला–वृश्चिक–धनु–मकर–कुभ–मीना. सर्वे राशयः स्वस्वस्वाम्यधिष्ठिता इह शान्तिकपूजामहोत्सवे आगच्छन्तु २, इदमर्घ्यं पाद्य बलिं चरुम् आचमनीय गृह्णन्तु २, सन्निहिता भवन्तु २ स्वाहा, जल गृह्णन्तु २, गन्व० अक्षतान्० फलानि० मुद्रा० पुष्प० धूप० दीप० नैवेद्य० सर्वोपचारान्० गृ० २, शान्ति कुर्वन्तु, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा ॥ अनेन सर्वराशीना परिपिण्डितपूजा ॥ ततः पीठस्य द्वादशहस्तवस्त्राच्छादनम् ॥ इति तृतीयपीठपूजनम् ॥ (आचा० दि० पृ० २२०)

अथ चतुर्थपीठे नक्षत्रपूजनम् । प्रथम पुष्पाञ्जलिं गृहीत्वा—

नासत्यप्रमुखा देवा अधिष्ठितनिजोडवः । अत्रैत्य शान्तिके सन्तु सदा सन्निहिता सताम् ॥ १ ॥

इति नक्षत्रपीठे पुष्पाञ्जलिक्षेपः ॥ ततोऽश्विनीं प्रति–

ॐ नमः कर्काय कर्क इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ४ ॥ सिंहं प्रति—
पद्मिनीपतिसंवासः पूर्वाशाकृतसंश्रयः । सिंहः समस्तदुःखानि विनाशयतु धीमताम् ॥ ५ ॥
ॐ नमो सिंहाय सिंह इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ६ ॥ कन्यां प्रति—
बुधस्य सदनं रम्यं तस्यैवोच्चत्वकारिणी । कन्या कृतान्तदिग्वासा समानन्दं प्रयच्छतु ॥ ६ ॥
ॐ नमः कन्यायै कन्ये इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ६ ॥ तुलां प्रति—
यो दैत्यानां महाचार्य—स्तस्यावासत्वमागतः । शनेरुच्चत्वदाताऽस्तु पश्चिमास्थतुलाधरः ॥ ७ ॥
ॐ नमस्तुलाधराय तुलाधर इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ७ ॥ वृश्चिकं प्रति—
भौमस्य तु खलु क्षेत्रं धनदाशाविभासकः । वृश्चिको दुःखसंघातं शान्तिकेऽत्र निहन्तु नः ॥ ८ ॥
ॐ नमो वृश्चिकाय वृश्चिक इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ८ ॥ धन्विनं प्रति—
सर्वदेवगणार्च्यस्य सदनं पददायिनः । सुरेन्द्राशास्थितो धन्वी धनवृष्टिं करोतु नः ॥ ९ ॥
ॐ नमो धन्विने धन्विन् इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ९ ॥ मकरं प्रति—
निवासः सूर्यपुत्रस्य भूमिपुत्रोच्चताकरः । मकरो दक्षिणासंस्थः संस्थामीर्तिं विहन्तु नः ॥ १० ॥

अथ तृतीयपीठं द्वादशराशिपूजनम् । पुष्पाञ्जलिं गृहीत्वा—

मेषवृषमिथुनकर्कट–सिंहकन्यावणिजालिचापधराः । मकरघटमीनगताः सन्निहिता राशयः सन्तु ॥ १ ॥

इति राशिपीठोपरि पुष्पाञ्जलिक्षेपः ॥ ततो मेषं प्रति—

मंगलस्य निवासाय सर्वोच्चत्वकराय च । मेषाय पूर्वसंस्थाय नमः प्रथमराशये ॥ १ ॥

ॐ नमो मेषाय मेष इह शान्तिकपूजामहोत्सवे आगच्छ आगच्छ इदमर्घ्यं पाद्यं बलिं चरुम् आचमनीयं गृहाण २, सन्निहितो भव २ स्वाहा, जलं गृहाण २, गन्धं० अक्षतान्० फलानि० पुष्पं० धूपं० दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुरु २, तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितं यच्छ २ स्वाहा ॥ अनेन मन्त्रेण सर्वोपचारैः मेषपूजनम् ॥ १ ॥ वृषं प्रति—

चन्द्रोच्चकरणं याम्य–दिशि स्थायी कवेर्गृहम् । वृषः सर्वाणि पापानि शान्तिकेऽत्र निहन्तु ॥ २ ॥

ॐ नमो वृषाय वृष इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ २ ॥ मिथुनं प्रति—

शशिनन्दनगेहाय राहूच्चत्वकराय च । पश्चिमाशाश्रितायास्तु मिथुनाय नमः सदा ॥ ३ ॥

ॐ नमो मिथुनाय मिथुन इह शान्तिकपूजामहोत्सवे० शेषं पूर्ववत् ॥ ३ ॥ कर्कं प्रति—

वाक्पतेरुच्चकरणं शरणं तारकेशितुः । कर्कटं धनदाशास्थं पूजयामो निरन्तरम् ॥ ४ ॥

ॐ नमो ब्रह्मणे ऊर्ध्वलोकाधीश्वराय सर्वसुरप्रतिपन्नपितामहाय स्थविराय नाभिसंभवाय काञ्चनवर्णाय चतुर्मुखाय श्वेतवस्त्राय हंसवाहनाय कमलसंस्थाय पुस्तककमलहस्ताय श्रीब्रह्मन् सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ९ ॥ नागान् प्रति—

मणिकिरणकदम्बाडम्बरालम्बितुंगो—त्तमकरणशरण्यागण्यनित्यार्हदाज्ञाः ।
बलिभुवनविभावैः स्वैरगन्धाः सुधान्ता, गुरुवरभुवि लात्वा यान्तु ते दन्दशूकाः ॥ १० ॥

ॐ ह्रीं फु नमः श्रीनागेभ्यः पातालस्वामिभ्यः श्रीनागमण्डल सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ १० ॥

ॐ नमः सर्वेभ्यो दिक्पालेभ्यः शुद्धसम्यग्दृष्टिभ्यः सर्वजनपूजितेभ्यः सर्वेऽपि दिक्पालाः सायुधाःसवाहनाः सपरिच्छदाः इह शान्तिकपूजामहोत्सवे आगच्छन्तु आगच्छन्तु इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु गृह्णन्तु स्वाहा, सन्निहिता भवन्तु भवन्तु स्वाहा, जलं गृह्णन्तु गृह्णन्तु, गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णन्तु गृह्णन्तु, शान्तिं कुर्वन्तु कुर्वन्तु, तुष्टिं० पुष्टिं०ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु यच्छन्तु स्वाहा । इति सर्वदिक्पालपरिपिण्डितपूजाक्रमः । एवं दिक्पालानां पूजां विधाय पीठे दशहस्तवस्त्रेणाच्छादनं विधेयम् ॥इति द्वितीयपीठपूजनम् ॥ ( आ० दि० पृ० २७८ )

द्वितीयदिने
प्रातः
करणीयः

ॐ य नमः श्रीवायवे वायव्यदिगधीशाय धूसराङ्गाय रक्ताम्बराय हरिणवाहनाय ध्वजप्रहरणाय श्रीवायो सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ६ ॥ धनद प्रति—

दिननाथलक्षसमदीप्तिदीपिताखिलदिग्विभागमणिरम्यपाणियुग् ।
सद्गण्यपुण्यजनसेवितक्रमो धनदो ददातु जिनपूजने श्रियम् ॥ ७ ॥

ॐ य य य नमः श्रीधनदाय उत्तरदिगधीशाय सर्वयक्षेश्वराय कैलाससंस्थाय अलकापुरीप्रतिष्ठाय शक्रकोशाध्यक्षाय कनकाङ्गाय श्वेतवस्त्राय नरवाहनाय रत्नहस्ताय श्रीधनद सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ७ ॥ ईशान प्रति—

क्षुभ्यत्क्षीराब्धिगर्भाम्बुनिवहसततक्षालिताभोजवर्णः, स्वःसिद्ध्यृद्धिप्रगल्भीकरणविरचितात्यन्तसपातिनृत्यः ।
तार्तीयाक्षिप्रतिष्ठस्फुटदहनवनज्वालया लालिताङ्गः, शम्भुः शं भासमानं रचयतु भविनां क्षीणमिथ्यात्वमोह. ॥ ८ ॥

ॐ नमः श्री-ईशानाय ईशानदिगधीशाय सुरासुरनरवन्दिताय सर्वभुवनप्रतिष्ठाय श्वेतवर्णाय गजाजिनावृताय वृषभवाहनाय पिनाकशूलधराय श्री-ईशान सायुध सवाहन सपरिच्छद इह० शेष पूर्ववत् ॥ ८ ॥ ब्रह्माण प्रति—

उद्यत्पुस्तकशस्तहस्तनिवहः सन्न्यस्तपापोद्भव', शुद्धध्यानविधूतकर्मविकलो लालित्यलीलानिधि ।
वेदोच्चारविसारिचारुवदनोन्मादः सदा सौम्यदृक्, ब्रह्मा ब्रह्मणि निष्ठितं वितनुताद् भव्यं समस्तं जगत् ॥ ९ ॥

ॐ घं घं घं नमो यमाय धर्मराजाय दक्षिणदिगधीशाय समवर्त्तिने धर्माधर्मविचारकरणाय कृष्णवर्णाय चर्मावरणाय महिषवाहनाय दंडहस्ताय श्रीयम सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ३ ॥ निर्ऋतिं प्रति—

प्रेतान्तप्रोतगंडप्रातकडितलङ्घ्मुंडितामुंडधारी, दुर्वारीभूतवीर्याध्यव[illegible]लसित्रपयिनिर्घातनार्थी ।
कार्श्यामर्शप्रदीप्यत्कुणपकृतघदोन क्रतेव्याप्तपार्श्व—स्तीर्थेशस्नात्रकाले [illegible] निर्ऋतिर्दुष्टसंघातघातम् ॥ ४ ॥

ॐ ह् स् क् ल् ह्रीं नमः ह्रीं श्रीं निऋतये नैऋतदिगधीशाय [illegible] व्याघ्रचर्मावृताय मुद्गरहस्ताय प्रेतवाहनाय श्रीनिऋते सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ४ ॥ [illegible]

कल्लोलोल्वणलोलललितचलत्प्रालंबमुक्तावली—लीलालंभिततारकाढ्यगगनः सानन्दसन्मानसः ।
स्फूर्जन्मागधसुस्थितादिविबुधैः संसेव्यपादद्वयो, बुद्धिं श्रीवरुणो ददातु विशदां नीतिप्रतानाद्भुतः ॥ ५ ॥

ॐ वं नमः श्रीवरुणाय पश्चिमदिगधीशाय समुद्रवासाय मेघवर्णाय पीताम्बराय पाशहस्ताय मत्स्यवाहनाय श्रीवरुण सायुध सवाहन सपरिच्छद इह० शेषं पूर्ववत् ॥ ५ ॥ वायुं प्रति—

ध्वस्तध्वान्तध्वजपटलटछम्पटाटंकशंकः, पंकव्रातश्लथनमथनः पार्श्वसंस्थायिदेवः ।
अर्हत्सेवाविदलितसमस्ताघसंघो विदध्यात्, बाह्यान्तस्थप्रचुररजसां नाशनं श्रीनभस्वान् ॥ ६ ॥

द्वितीयदिने प्रातः करणीयः

॥ ६१ ॥

# શ્રી અર્હદ્ મહાપૂજન (શાંતિક વિધાન) પૂજન સામગ્રી લિસ્ટ

કંકુ શેર ०।- આનાનુ
શ્રીફળ નગ ૨૫
લાલ નાડાછડી બંડલ-૫
મીંઢળ નગ ૨००
મરડાસીંગ નગ ૨००
સોપારી નગ ૧૫०
બદામ નગ ૧૫०
પતાસા નગ ૧૫०
લાલ સોપારી નગ ૧૫
કાળી સોપારી નગ ૫
કંકુપ શેર ૧
ગુગળ શેર ०॥
ખારેક નગ ૨૧
અખરોટ નગ ૨૧
બદામના ગોળા શેર ०।
પીસ્તા શેર ०।
ચારોલી શેર ०।
તજ શેર ०।

બરાસ તોલા ૫
સોનેરી વરખ વાલ ૨
રૂપેરી વરખ થોકડી ૨०
સોનેરી કાતરેલુ બાદલુ તોલા ૫
ભગવતીની આંગી માટે સોનેરી-રૂપેરી
બાદલુ તોલા ૧०
સોના રૂપાના ફુલ તોલા ૨
સર્વ ઔષધી } ત્રણ ઔષધી
શતમૂલીકા } વિદ્યાશાળામાંથી
સહસ્રમૂલીકા } લાવવી અમદાવાદ
પંચરત્નની પોટલી નગ ૧०
કુંવારી કન્યાએ કાતેલા સુતરનો દડો
એકવીશ તારનો વાર ૧००
ગુલાબજળ સીસો મોટો ૧
સુખડનું તેલ તો ૨
અગરનો ચુઓ તો ०॥
અત્તર ગુલાબ તો ०॥
,, ખસ તો ०॥

૧૩ હરણી ,, ,, ૩
સુકા સીતાફળ ન. ૧० (જરૂર જોઈએ)
મહુડાના ફુલ શેર ०॥
હોમ ચાલુ રાખવા માટે પરચુરણ
છોડીયા તથા લાકડા થેલો ૧
માટીના કોડીયા ન ૧૧૧ (જરૂર જોઈએ)
માટીની કુંડી ન ૪
કુંડ માટે ઈંટો ન ૧૫०
ગાડી ભરી માટી તથા રેત
પાકી ઈંટો ન ૨૫
સીમેન્ટ શેર ૫

## ફળની યાદી

લીલા શ્રીફળ ન ૩
બીજોરા ન ૪
લીલીદ્રાક્ષ શેર ०॥
પપૈયા નગ ૧૫
ટેટી ,, ૫
તડબુચ ,, ૫
અનનાસ ,, ૫
મોસંબી ,, [illegible]